तेऽप्यक्रूरचमूरुचर्मवसनैर्नीताः क्षयं लुब्धकै-
दम्भस्य स्फुरितं विदन्नपि जनो जाल्मो गुणानीहते ॥ ८७ ॥

ऊढा येन महाधुराः सुविषमे मार्गे सदैकाकिना
सोढो येन कदाचिदेव न निजे गोष्ठेऽन्यशौण्डध्वनिः ।
आसीद्यस्तु गवां गणस्य तिलकं तस्यैव संप्रत्यहो
धिक्कष्टं धवलस्य जातजरसो गोः पण्यमुद्घोष्यते ॥ ८८ ॥

अस्थानोद्योगदुःखं जहिहि नहि नभः पङ्गुसंचारयोग्यं
स्वायासायैव साधो तव शलभ जवाभ्यासदुर्वासनेयम् ।
ते देवस्याप्यचिन्त्याः प्रचलितभुवनाभोगहेलावहेला-
मूलोत्खातानुमार्गा गतगिरिगुरवस्तार्क्ष्यपक्षाग्रवाताः ॥ ८९ ॥

चन्द्रेणैव तरङ्गभङ्गिबहुलं संवर्ध्यमानाम्भसो
दद्युर्जीवनमेव किं गिरिसरित्स्रोतांसि यद्यम्बुधेः ।
तेष्वेव प्रतिसंविधानविकलं पश्यत्सु साक्षिष्विव
द्राग्दर्पोद्धुरमागतेष्वपि न स क्षीयेत यद्यन्यथा ॥ ९० ॥

किलैकचुलकेन यो मुनिरपारमब्धिं पपौ
सहस्रमपि घस्मरो विकृत एव तेषां पिबेत् ।
स संभवति किंचिदम्बरविकासिधाम्ना विना
सदप्यसदिव स्थितं स्फुरितमन्तरोजस्विनाम् ॥ ९१ ॥

ग्रावाणोऽत्र विभूषणं त्रिजगतो मर्यादया स्थीयते
नन्वत्रैव विधुः स्थितो हि विबुधाः संभूय पूर्णाशिषः ।
शेते चोद्गतनाभिपद्मविलसद्ब्रह्मेह देवः स्वयं
दैवादेव गतः स्वकुक्षिभृतये सोऽप्यम्बुधिर्निम्नगाः ॥ ९२ ॥

अनीर्ष्याः श्रोतारो मम वचसि चेद्वच्मि तदहं
स्वपक्षाद्भेतव्यं न तु बहु विपक्षात्प्रभवतः ।

---

१. 'तेऽपि क्रूर–' इति सुभा०. २. 'बहु न तु' इति सुभा०.

तमस्याक्रान्ताशे कियदिव हि तेजोवयविनः
स्वशक्त्या भासन्ते दिवसकृति सत्येव न पुनः ॥ ९३ ॥
एतत्तस्य मुखात्कियत्कमलिनीपत्रे कणं पाथसो
यो मुक्तामणिरित्यमंस्त स जडः शृण्वन्नकस्मादपि ।
अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने तत-
स्तत्रोड्डीय गतो ममेत्यनुनिशं निद्राति नान्तः शुचा ॥ ९४ ॥
आस्तेऽत्रैव सरस्यहो बत कियान्संतोषपक्षग्रहो
हंसस्यास्य मनाङ् न धावति मनः श्रीधाम्नि पद्मे क्वचित् ।
सुप्तोऽद्यापि न बुध्यते तदितरस्तावत्प्रतीक्षामहे
वेलामित्युदरप्रिया मधुलिहः सोढुं क्षणं न क्षमाः ॥ ९५ ॥
भेकेन क्वणता सरोषपरुषं यत्कृष्णसर्पानने
दातुं गण्डचपेटमुज्झितभिया हस्तः समुल्लासितः ।
यच्चाधोमुखमक्षिणी विदधता नागेन तत्र स्थितं
तत्सर्वं विषमन्त्रिणो भगवतः कस्यापि लीलायितम् ॥ ९६ ॥
मृत्योरास्यमिवाततं धनुरिदं चाशीविषाभाः शराः
शिक्षा सापि जितार्जुनप्रभृतिका सर्वत्र निम्नाकृतिः ।
अन्तः क्रौर्यमहो शठस्य मधुरं हा हारि गेयं मुखे
व्याधस्यास्य यथा भविष्यति तथा मन्ये वनं निर्मृगम् ॥ ९७ ॥
ग्रावग्रस्तसमस्तचेतनमनोवैदग्ध्यमुग्धो जनः
कः स्पर्धामधिरोहति त्रिभुवने चित्रं त्वया तन्वता ।
भावानां सदसद्विवेककलनाभ्यासेन जीर्णान्तरं
दूरादेव न नाम येन हृदयं वोढुं कृतो दुर्ग्रहः ॥ ९८ ॥

१. 'कियदपि' इति सुभा०. २. 'यदस्मादपि' इति सुभा०. ३. 'शनैः' इति सुभा०. ४. 'गते हहेत्यनुदिनम्' इति सुभा०. ५. 'मतिः' इति सुभा०. ६. 'विबुध्यते न तदितः' इति सुभा०. ७. 'उर्षसि प्रिया' इति सुभा०. ८. 'त एव क्षमाः' इति सुभा०. ९. 'कर्णचपेटम्' इति सुभा०. १०. 'पिदधता' इति सुभा०. ११. 'अमी' इति सुभा०. १२. 'जितार्जुना प्रतिभयं सर्वाङ्गनिम्ना गतिः' इति सुभा०.

कोऽयं भ्रान्तिप्रकारस्तव पवन पदं लोकपादाहतानां
तेजस्विव्रातसेव्ये नभसि नयसि यत्पांसुपूरं प्रतिष्ठाम् ।
अस्मिन्नुत्थाप्यमाने जननयनपथोपद्रवस्तावदास्तां
केनोपायेन साध्यो वपुषि कलुषतादोष एष त्वयैव ॥ ९९ ॥

एते ते विजिगीषवो नृपगृहद्वारार्पणावेक्षणाः
क्षिप्यन्ते वरयाचनाहितधियः कोपोद्धतैर्वेत्रिभिः ।
अर्थेभ्यो विषयोपभोगविरसैर्नाकारि यैरादर-
स्ते तिष्ठन्ति मनस्विनः सुरसरित्तीरे मनोहारिणि ॥ १०० ॥

वाता वान्तु कदम्बरेणुशबला नृत्यन्तु सर्पद्विषः
सोत्साहा नवतोयपानगुरवो मुञ्चन्तु नादं घनाः ।
मग्नां कान्तवियोगदुःखदहने मां वीक्ष्य दीनाननां
विद्युत्प्रस्फुरसि त्वमप्यकरुणे स्त्रीत्वेऽपि तुल्ये सति ॥ १०१ ॥

प्राणा येन समर्पितास्तव बलाद्येन त्वमुत्थापितः
स्कन्धे येन चिरं धृतोऽसि विदधे यस्ते सपर्यामपि ।
तस्यान्तः स्मितमात्रकेण जनयञ्जीवापहारं क्षणा-
द्भ्रातः प्रत्युपकारिणां धुरि परं वेताल लीलायसे ॥ १०२ ॥

रज्ज्वा दिशः प्रवितताः सलिलं विषेण
पाशैर्मही हुतभुजा ज्वलिता वनान्ताः ।
व्याधाः पदान्यनुसरन्ति गृहीतचापाः
कं देशमाश्रयतु यूथपतिर्मृगाणाम् ॥ १०३ ॥

प्रेङ्खन्मयूखनखशातशिखानिखात-
विख्यातवारणगणस्य हरेर्गुहायाम् ।

---

१. 'पवन घनावस्करस्थानजातम्' इति सुभा०. २. 'यस्मिन्' इति सुभा०. ३. 'सह्यः' इति सुभा०. अयं 'कोऽयं' इत्यादिश्लोकः सुभाषितावलौ भागवतामृतदत्तनाम्ना समुद्धृतः. ४. 'शबला' इति सुभा०. ५. 'नववारिभारगुरवो' इति सुभा०. ६. 'दुःखजलधौ' इति सुभा०. ७. 'विद्युत्किं स्फुरसि' इति सुभा०. ८. 'गृहीतबाणाः' इति सुभा०. ९. 'आश्रयति' इति सुभा०. अयं 'रज्ज्वा' इत्यादि श्लोकः सुभाषितावलौ मुक्तापीडनाम्ना समुद्धृतः. १०. 'नखपात—' इति सुभा०.

क्रोष्टा निकृष्टसरमासुतदृष्टिनष्ट-
धाष्टर्यः [1]प्रविष्ट इति कष्टमिहाद्य दृष्टम् ॥ १०४ ॥
दानार्थिनो मधुकरा यदि कर्णतालै-
र्दूरीकृताः करिवरेण मदान्धबुद्ध्या ।
स्वस्यैव गण्डयुगमण्डनहानिरेषा
भृङ्गाः पुनर्विकचपद्मवने चरन्ति ॥ १०५ ॥
विख्यातं विजयावहं रणभुवि व्याप्तं शुभैर्लक्षणै-
स्तं चेन्मुञ्चति कानने नरपतिस्तुङ्गं महान्तं गजम् ।
अश्वत्थाम्रकपुण्ड्रकेक्षुकदलीरास्वाद्य वंशाङ्कुरा-
न्स्वैरं तस्य मनोरमे विचरतः का नाम हानिर्वने ॥ १०६ ॥
विशालं शाल्मल्या नयनसुभगं वीक्ष्य कुसुमं
शुकस्यासीद्बुद्धिः फलमपि भवेदस्य सदृशम् ।
इति ध्यात्वोपास्तं फलमपि च दैवात्परिणतं
विपाके तूलोऽन्तः सपदि मरुता सोऽप्यपहृतः ॥ १०७ ॥
[2]अयं वारामेको निलय इति रत्नाकर इति
श्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः ।
क एवं जानीते निजकरपुटीकोटरगतं
क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनिः ॥ १०८ ॥

इति रत्नत्रये भल्लटशतकं समाप्तम् ।

---

## [3]श्रीनीलकण्ठदीक्षितप्रणीतं
# सभारञ्जनशतकम् ।

षड्दर्शनीपरिज्ञानमण्डितैरिव पण्डितैः ।
स्तम्भैश्चित्रैर्वितानैश्च सभा किमवभासते ॥ १ ॥

---

१. 'निविष्टः' इति सुभा०. अयं 'प्रेङ्खन्मयूख' इत्यादिश्लोकः सुभाषितावलौ उपाध्यायधनवर्मनाम्ना समुद्धृतः. २. 'अयं वारामेको' इत्यादिश्लोकः शार्ङ्गधरपद्धतौ मालवरुद्रनाम्ना समुद्धृतः. ३. श्रीमदप्पदीक्षितसोदर्यस्याच्चा(प्पा)दीक्षितस्य पौत्रो नारायणदीक्षितपुत्रः श्रीनीलकण्ठदीक्षितोऽयं ख्रिस्ताब्दीयसप्तदशशतकपूर्वार्धे द्रविडदेशमलंचकार जन्मना,

सन्ति सर्वविधा मर्त्या न सन्त्येके विपश्चितः ।
असूर्येणेव लोकेन किं तेन विषयेण नः ॥ २ ॥
उद्यन्तु शतमादित्या उद्यन्तु शतमिन्दवः ।
न विना विदुषां वाक्यैर्नश्यत्याभ्यन्तरं तमः ॥ ३ ॥
बहुभ्यो बहु बोद्धव्यं बहुधा बहुवासरान् ।
बहुकल्पशतस्थायि लब्धुं बहुविधं यशः ॥ ४ ॥
पाषाणाः सर्व एवैते पद्मरागेषु को गुणः ।
प्रकाशः कश्चिदत्रास्तेऽपरत्र स न विद्यते ॥ ५ ॥

---

यतोऽनेन नीलकण्ठविजयप्रारम्भे 'अष्टत्रिंशदुपस्कृतसप्तशताधिकचतुःसहस्रेषु (४७३८)। कलिवर्षेषु गतेषु ग्रथितः किल नीलकण्ठविजयोऽयम् ॥' इति स्वग्रन्थनिर्माणसमयो लिखितः. अस्मज्ज्ञाता नीलकण्ठदीक्षितकृता ग्रन्थास्त्वेते—(१) अन्यापदेशशतकम्, (२) कलिविडम्बनशतकम्, (३) गङ्गावतरणम्, (४) नीलकण्ठविजयः (नीलकण्ठचम्पूः), (५) शान्तिविलासः, (६) शिवलीलार्णवः, (७) सभारञ्जनम्. वर्तमानशतक एव काश्यां समुत्पन्नेन शंकरदीक्षितेन प्रणीता गङ्गावतरणचम्पूः पूर्वोक्तगङ्गावतरणाद्भिन्ना. काव्यमालाद्वितीयाङ्के श्रीमदप्पदीक्षितनाम्ना मुद्रितमुपदेशशतकं नीलकण्ठदीक्षितेन कृतं न त्वप्पदीक्षितेनेत्यपि केचिद्वदन्ति. अस्मद्दृष्टपुस्तकद्वये तु 'अप्पदीक्षितकृतमुपदेशशतकम्' इत्येवास्ति. (१) ओष्ठशतककर्ता शुक्लजनार्दनसूनुः कविनीलकण्ठः, (२) काशिकातिलककर्ता रामभट्टसूनुर्नीलकण्ठभट्टः, (३) कुण्डमण्डपविधानकर्ता नीलकण्ठः, (४) जारजातशतककर्ता कविनीलकण्ठशर्मा, (५) नारायणगीताकर्ता नीलकण्ठब्रह्मचारी, (६) ब्रह्ममीमांसाभाष्यकर्ता नीलकण्ठशैवाचार्यः, (७) भगवन्तभास्करकर्ता शंकरभट्टसूनुर्नीलकण्ठभट्टः, (८) भारतभावदीपस्य मन्त्ररहस्यप्रकाशिकायाश्च कर्ता गोविन्दसूनुर्नीलकण्ठचतुर्धरः, (९) वर्षतन्त्रकर्ता अनन्तदैवज्ञसूनुर्नीलकण्ठदैवज्ञः, इत्याद्या अन्येऽपि बहवो नीलकण्ठास्तत्तद्देशे काले च समभूवन्. श्रीमाधवकविना शंकरविजयस्य पञ्चदशे सर्गे 'तदनन्तरमागमान्तविद्यां प्रणतेभ्यः प्रतिपादयन्तमेनम् । हरदत्तसमाह्वयोऽधिगम्य स्वगुरुं संगिरते स्म नीलकण्ठम् ॥', 'सितभूतितरङ्गिताखिलाङ्गैः स्फुटरुद्राक्षकलापकम्रकण्ठैः । परिवीतमधीतशैवशास्त्रैर्मुनिरायान्तममुं ददर्श शिष्यैः ॥', 'विजितो यतिभूभृता स शैवः सह गर्वेण विसृज्य च स्वभाष्यम् । शरणं प्रतिपेदिवान्महर्षिं हरदत्तप्रमुखैः सहात्मशिष्यैः ॥' इत्यादिना वर्णितः कश्चन नीलकण्ठाभिधो महाशैवः श्रीशंकराचार्यसमयेऽप्यासीत्. पूर्वोक्तो ब्रह्ममीमांसाभाष्यकर्ता नीलकण्ठशैवाचार्यः कदाचिदयमेव स्यात्.

जात्यन्धा जातिबधिरा जातिमूकाश्च ते जनाः ।
सम्यगाराधिता यैर्न सन्तो विज्ञानसिन्धवः ॥ ६ ॥
अपि मानुष्यकं लब्ध्वा भवन्ति ज्ञानिनो न ये ।
पशुतैव वरा तेषां प्रत्यवायाप्रवर्तनात् ॥ ७ ॥
किं परोक्षं किमध्यक्षं किं लभ्यं किं नु दुर्लभम् ।
सर्वमैन्द्रियकं वस्तु सर्वं करगतं सताम् ॥ ८ ॥
स्थावरा जङ्गमा मर्त्या ब्राह्मणा मुनयः सुराः ।
शिव इत्यप्यमी भेदाश्चिदुत्कर्षनिबन्धनाः ॥ ९ ॥
विद्युज्जलधरो वृष्टिश्चन्द्रार्कौ सागरा इति ।
सर्वमद्भुतमज्ञानाज्जानतां तु न किंचन ॥ १० ॥
तत्र तत्र स्थितैर्ज्ञानकरणैरिव विग्रहः ।
विद्वद्भिः शोभते देशस्तैर्विहीनस्त्वमङ्गलः ॥ ११ ॥
अमलीमसमच्छिद्रमक्रौर्यमतिसुन्दरम् ।
अदेयमप्रतिग्राह्यमहो ज्ञानं महाधनम् ॥ १२ ॥
संदर्भशक्तिहीनानां शब्दाभ्यासो वृथा श्रमः ।
मुग्धानि लब्ध्वा पुष्पाणि मुण्डितः किं करिष्यति ॥ १३ ॥
शास्त्रेषु दुर्ग्रहोऽप्यर्थः स्वदते कविसूक्तिषु ।
दृश्यं करगतं रत्नं दारुणं फणिमूर्धनि ॥ १४ ॥
आञ्जस्यं व्यवहाराणामार्जवं परमं धियाम् ।
स्वातन्त्र्यमपि तन्त्रेषु सूते काव्यपरिश्रमः ॥ १५ ॥
साहित्यविद्याहीनानां सर्वशास्त्रविदामपि ।
समाजं परिपश्यन्ति समजं[1] बुद्धिशालिनः ॥ १६ ॥
अशिक्षितानां काव्येषु शास्त्राभ्यासो निरर्थकः ।
किमस्त्यनुपनीतस्य वाजपेयादिभिर्मखैः ॥ १७ ॥
अन्धा विद्वज्जनैर्हीना मूका कविभिरुज्झिता ।
बधिरा गायनैर्हीना सभा भवति भूभृताम् ॥ १८ ॥

१. समजः पशुसमूहः.

साहित्यादपि शास्त्राणि विशिष्टानीति चेन्मतिः ।
ततोऽपि वेदाध्ययनं ततोऽपि शिवकीर्तनम् ॥ १९ ॥
सन्त्वश्वाः सन्तु मातङ्गाः सन्तु योधाः सहस्रशः ।
नरेन्द्राणां विशेषेण न विना कविना यशः ॥ २० ॥
काणाः कमलपत्राक्षाः कदर्याः कल्पशाखिनः ।
कातरा विक्रमादित्याः कविदृग्गोचरं गताः ॥ २१ ॥
पारवश्यं वृथा दास्यं पञ्चानामेकदारता ।
पाण्डवानामभूत्कीर्त्यै पाराशर्यकवेर्गिरा ॥ २२ ॥
जानाते यन्न चन्द्रार्कौ जानते यन्न योगिनः ।
जानीते यन्न भर्गोऽपि तज्जानाति कविः स्वयम् ॥ २३ ॥
सर्वासामपि विद्यानां साहित्यं हि कवेः पदम् ।
साधारण्येऽपि यत्रैव सारस्वतपदं ध्रुवम् ॥ २४ ॥
नादातव्यं न दातव्यं न कर्तव्यं च किंचन ।
सान्त्वमेकं प्रयोक्तव्यं सर्वं तस्य वशे जगत् ॥ २५ ॥
नामरूपात्मकं विश्वं दृश्यते यदिदं द्विधा ।
तत्राद्यस्य कविर्वेधा द्वितीयस्य चतुर्मुखः ॥ २६ ॥
ज्योतिष्टोमे किमुक्थे किं किमाज्ये किं रथन्तरे ।
स्तुतिरित्येव हृष्यन्ति सर्वज्ञा अपि देवताः ॥ २७ ॥
न जातिरूपकर्माणि दृश्यन्ते मृदुभाषिणि ।
पक्षिणो मलिनास्तत्र परपुष्टा निदर्शनम् ॥ २८ ॥
अर्थहीनोऽपि मधुरः शब्दो लोकप्रियंकरः ।
वीणावेणुमृदङ्गादीन्यत्रोदाहरणानि नः ॥ २९ ॥
जिघांसन्तोऽपि पशवो रुदन्तोऽपि स्तनंधयाः ।
घ्नन्तोऽपि रिपवो युद्धे वशमायान्ति सान्त्वतः ॥ ३० ॥
दातुः प्रतिग्रहीतुश्च यौ हस्तावुत्तराधरौ ।
तयोरप्यौत्तराधर्यं ताभ्यामेवोपपाद्यते ॥ ३१ ॥

अमर्त्याः सन्तु मर्त्या वा चेतनाः सन्त्वचेतनाः ।
दानमेव पुरस्कृत्य स्तूयते भुवनैस्त्रिभिः ॥ ३२ ॥
देयं द्रव्यमियत्तावद्दानोत्कर्षे न कारणम् ।
किं त्ववच्छेदराहित्यं धनदाम्बुदयोरिव ॥ ३३ ॥
ददातिराददातिश्च द्वावेतौ परमाद्भुतौ ।
ययोः स्वाम्यं च दास्यं च लीलामात्रविजृम्भितम् ॥ ३४ ॥
दोषा अपि गुणायन्ते दातारं समुपाश्रिताः ।
कालिमानं किलालम्ब्य कालमेघ इति स्तुतिः ॥ ३५ ॥
किं दातुरखिलैर्दोषैः किं लुब्धस्याखिलैर्गुणैः ।
न लोभादधिको दोषो न दानादधिको गुणः ॥ ३६ ॥
अर्थाः साधारणा एव वियुज्यन्ते स्वभावतः ।
ममतां त्यजतां तेषु महदुत्पद्यते यशः ॥ ३७ ॥
मृतोऽप्यर्थं न मोक्ष्यामि बद्ध्वा नेष्यामि मूर्धनि ।
इति चेत्सुदृढो लोभः पात्रे देयमशङ्कितम् ॥ ३८ ॥
षष्टिर्देशान्तरे लभ्या शतं दत्त्वात्र नैगमे ।
पात्रे त्वेकमिहोत्सृज्य परत्रानन्तमाप्यते ॥ ३९ ॥
को दत्ते क इवादत्ते स्वादृष्टं स्वेन भुज्यते ।
धीभेदमात्रे दातृत्वे क्लिश्यन्ते कृपणाः कियत् ॥ ४० ॥
स्वातन्त्र्यं यदि चोरेऽपि भोक्तृत्वं यदि बन्धुषु ।
निष्कर्षे तु भ्रमः स्वाम्यं तत्त्यक्त्वा लभ्यतां यशः ॥ ४१ ॥
न धैर्येण विना लक्ष्मीर्न शौर्येण विना जयः ।
न ज्ञानेन विना मोक्षो न दानेन विना यशः ॥ ४२ ॥
स्वकीयान्भुञ्जते मत्स्याः स्वापत्यानि फणाधराः ।
बलाबलव्यवस्थेयं बलिनस्त्वकुतोभयाः ॥ ४३ ॥
गुरुं हत्वा दिवं यान्ति तृणं छित्त्वा पतन्त्यधः ।
बलिनां दुर्बलानां च श्रुतयोऽपि द्विधा स्थिताः ॥ ४४ ॥

---

१. वणिजि.

बलिनो बलिनः स्निह्यन्त्यबलं तु न गृह्णते ।
दावं दीपयते चण्डो दीपं व्याहन्ति मारुतः ॥ ४५ ॥

बाधका अपि लोकानां बलिनो बिभ्यति स्वयम् ।
सर्वं बलवतः पथ्यं भिषग्भिरपि गीयते ॥ ४६ ॥

शुभप्रारब्धलब्धापि लक्ष्मीः शौर्यविवर्जिते ।
शोकेन दुःखमाप्नोति षण्ढे कुलवधूरिव ॥ ४७ ॥

सर्वत्र लाल्यते शूरो भीरुः सर्वत्र हन्यते ।
पच्यन्ते केवला मेषाः पूज्यन्ते युद्धदुर्मदाः ४८ ॥

भार्यायाः सुन्दरः स्निग्धो वेश्यायाः सुन्दरो धनी ।
श्रीदेव्याः सुन्दरः शूरो भारत्याः सुन्दरः सुधीः ॥ ४९ ॥

न शौर्यं शौर्यमित्येव स्तूयते बुद्धिशालिभिः ।
किं तु नीत्या समाश्लिष्टं वाग्मित्वमिव मेधया ॥ ५० ॥

शौर्येण लोकसेव्यत्वं शौर्येण क्षितिपालता ।
शौर्येण लभ्यः स्वर्गोऽपि शौर्यं कस्य न साधनम् ॥ ५१ ॥

समरेषु नरेन्द्राणां सवनेषु द्विजन्मनाम् ।
पतिकर्मसु नारीणां शौर्यं भवति भूषणम् ॥ ५२ ॥

शौर्ये तुल्ये कथं वृत्तं स्वामी दास इति द्विधा ।
अन्वयव्यतिरेकाभ्यां नीतेरित्यवधार्यताम् ॥ ५३ ॥

न जयाय स्वतः शौर्यं किं तु नीत्योपबृंहितम् ।
प्रयुक्तं हि जयत्यस्त्रं प्रयोक्ता न स्वतः क्वचित् ॥ ५४ ॥

इदमेव परं शौर्यमुपायैस्त्रिभिरन्वितम् ।
इदमेव परं मौर्ख्यमुपायैस्त्रिभिरुज्झितम् ॥ ५५ ॥

पराक्रमन्ते युद्धेषु सममेवोभये भटाः ।
विजयन्तेऽभ्युपायज्ञा विजीयन्ते तदुज्झिताः ॥ ५६ ॥

किं शास्त्रैर्बहुधाभ्यस्तैः किं चातुर्येण किं धिया ।
किं शौर्येणानिवार्येण ललाटे चेन्न लिख्यते ॥ ५७ ॥

घटमानाः कुटुम्बेषु दरिद्रति विपश्चितः ।
मूढेषु रमते लक्ष्मीरहो दिष्टस्य चेष्टितम् ॥ ५८ ॥
तुल्यं कर्षन्ति पृथिवीं तुल्यं शास्त्राण्यधीयते ।
उन्मज्जन्ति निमज्जन्ति दिष्टस्यैकस्य चेष्टया ॥ ५९ ॥
लुभ्यन्ति वितरन्तोऽपि कुप्यन्ति सरला अपि ।
मुह्यन्ति मतिमन्तोऽपि मोक्तुर्भाग्यविपर्ययात् ॥ ६० ॥
अधीयते विजानन्ति विरज्यन्ति मुहुर्मुहुः ।
नात्यन्ताय निवर्तन्ते नरा वैषम्यतो विधेः ॥ ६१ ॥
दोहदैरालवालैश्च कियद्वृक्षानुपास्महे ।
ते तु कालं प्रतीक्षन्ते फलपुष्पसमुद्गमे ॥ ६२ ॥
कः प्रसूते पुरोवातं कः प्रेरयति वारिदम् ।
प्राप्ते तु श्रावणे मासि भवत्येकार्णवं जगत् ॥ ६३ ॥
कालः करोति कार्याणि काल एव निहन्ति च ।
करोमीति विहन्मीति मूर्खो मुह्यति केवलम् ॥ ६४ ॥
अपि कालस्य यः कालः सोऽपि कालमपेक्षते ।
कर्तुं जगन्ति हन्तुं वा कालस्तेन जगत्प्रभुः ॥ ६५ ॥
कालः सदागतिरपि स्थायीव परिचेष्टते ।
चण्डमारुतवद्विश्वमधरोत्तरयन्क्षणात् ॥ ६६ ॥
कालश्चालयति प्रायः पण्डितान्पामरानपि ।
तं चेच्चिकीर्षसि वशे तितिक्षैव महौषधम् ॥ ६७ ॥
रन्ध्रेषु प्रहरिष्यन्तः कति कामादयोऽरयः ।
क्षणान्नश्यति लोकोऽयं क्षमा चेन्न नियच्छति ॥ ६८ ॥
अपकारदशायामप्युपकुर्वन्ति साधवः ।
छिन्दन्तमपि वृक्षः स्वच्छायया किं न रक्षति ॥ ६९ ॥
स्रवत्येव तदा ज्ञानं स्रवत्येव तदा तपः ।
छिद्रं छिद्रमनुप्राप्य न चेच्छादयति क्षमा ॥ ७० ॥

क्षमां रक्षन्ति ये यत्नात्क्षमां रक्षन्ति ते चिरम् ।
क्षमास्ते निभृता येषु क्षमास्ते सर्वकर्मसु ॥ ७१ ॥
मूर्खाः शमयितुं दुःखं संरभन्ते ततस्ततः ।
क्षमयैव निगृह्णन्ति धीराः संरम्भवर्जिताः ॥ ७२ ॥
आ कल्यादा निशीथाच्च कुक्ष्यर्थं व्याप्रियामहे ।
न च निर्वृणुमो जातु शान्तास्तु सुखमासते ॥ ७३ ॥
नायास्यन्ते शरीराणि न दैन्यमवबुध्यते ।
संभवत्यपि चानन्दः शान्तिमभ्यस्यतां सताम् ॥ ७४ ॥
प्रसीदत्यपरिस्पन्दि पयः कलुषितं यथा ।
तथाशान्तमपि स्वान्तं प्रसीदति शनैः शनैः ॥ ७५ ॥
यत्नेन महता लभ्या दासा द्वित्राः सुखाय नः ।
शान्तस्य कालादष्टाद्याः शतं भृत्या अवेतनाः ॥ ७६ ॥
अपि मृद्व्या गिरा लभ्यः सदा जागर्त्यतन्द्रितः ।
नास्ति धर्मसमो भृत्यः किंचिदुक्तस्तु धावति ॥ ७७ ॥
अर्थेनोपार्ज्यते धर्मो धर्मेणार्थ उपार्ज्यते ।
अन्योन्याश्रयणं ह्येतदुभयोत्पत्तिसाधनम् ॥ ७८ ॥
विपणिः पुण्यतीर्थानि विक्रेतारस्त्वकिंचनाः ।
तृणेनाप्यन्ततो धर्मः पर्वसु क्रीयते महान् ॥ ७९ ॥
चुलकोदकमात्रेण धान्यमुष्टिव्ययेन वा ।
मरुभूमिषु दुर्भिक्षे धर्मसस्यं महाफलम् ॥ ८० ॥
धर्मो नर्मसखः कामे गुरुस्तत्त्वोपदेशने ।
भटः संगररङ्गेषु सचिवोऽर्थसमर्जने ॥ ८१ ॥
भुवि वृक्षो दिवि च्छाया भुवि कूपो जलं दिवि ।
भुवि यद्गृह्यते विप्रैर्दिवि तद्दीयते सुरैः ॥ ८२ ॥
कदलीकन्दवद्धर्मो न रोहति बहिर्गतः ।
छादितस्तु फलं चारु सूते पनसमूलवत् ॥ ८३ ॥

दुःखेनोपार्ज्यते धर्मः सुखेन तु विनाश्यते ।
कृच्छ्रलब्धमिमं त्रातुं नेच्छन्ति मुनयः सुखम् ॥ ८४ ॥
संपाद्यतां वा यत्नेन यद्वा विक्रीयतामयम् ।
सर्वथा भजतावाप्यो धर्मो भवति नान्यथा ॥ ८५ ॥
अर्थवन्तः प्रशस्यन्ते निन्द्यन्ते तद्विनाकृताः ।
आगमेष्वपि चेदेवमद्भुतं किं शरीरिषु ॥ ८६ ॥
अर्थोऽप्यर्थेन चेत्साध्यः का वार्ता धर्मकामयोः ।
अर्थः सर्वजगन्मूलमनर्थोऽर्थविपर्ययः ॥ ८७ ॥
कर्मज्ञानं च मोक्षाय कर्मण्यर्थोऽधिकारिता ।
अतोऽर्थेनैव कैवल्यं न कैवल्येन लभ्यते ॥ ८८ ॥
कथमर्थं निषेधन्तु श्रुतयः स्मृतयोऽपि वा ।
यासामेकं पदमपि न चलत्यर्थतो विना ॥ ८९ ॥
लक्ष्मीश इति गोविन्दो मेरुधन्वेति शंकरः ।
हिरण्यगर्भ इत्येव ब्रह्मापि बहु मान्यते ॥ ९० ॥
ऊर्ध्वं गच्छन्ति यं त्यक्त्वा यं गृहीत्वा पतन्त्यधः ।
तस्य गौरवमर्थस्य तावतैवानुमीयताम् ॥ ९१ ॥
गृहिणा यदि लभ्येत गृहिणी हृदयंगमा ।
संसार इति को भारस्तं सारमनुपश्यतः ॥ ९२ ॥
आहत्य चिनुमः स्वर्गमपवर्गमनुक्रमात् ।
अनुकूले हि दांपत्ये प्रतिकूलं न किंचन ॥ ९३ ॥
गृहिणीवृत्तिदोषेण गौतमोऽत्यन्ततापितः ।
आतस्थे दुःखविध्वंसं कैवल्यं परमं मुनिः ॥ ९४ ॥
अपि यत्परमं तत्त्वमर्धेन्दुकृतशेखरम् ।
तस्यापि तावानानन्दः किमस्मज्जननीं विना ॥ ९५ ॥
निन्दन्ति च प्रशंसन्ति निगमा यद्गृहाश्रमम् ।
दांपत्यसाम्यवैषम्यभेदादेतद्व्यवस्थितिः ॥ ९६ ॥

इन्द्रियाण्यनुपक्लेश्य लभ्यं श्रेयो गृहाश्रमे ।
अतस्तुर्याश्रमं प्राहुरबाधन्यायबाधितम् ॥ ९७ ॥
भुज्यते यत्सुखं धीरैरप्रमत्तैर्गृहाश्रमे ।
स्वर्गस्तस्यागसः पूर्तिरपवर्गोऽस्य नित्यता ॥ ९८ ॥
दृष्टदोषोऽपि गार्हस्थ्ये दीर्घदर्शितया स्वयम् ।
गार्हस्थ्यमेव परमं मेने नैयायिको मुनिः ॥ ९९ ॥
उच्चावचं जगद्दौःस्थ्यमेक एव निषेधति ।
प्रविष्टमात्रो नृपतिः प्रपञ्चमिव नः श्रुतिः ॥ १०० ॥
न राजानं विना राज्यं बलवत्स्वपि मन्त्रिषु ।
प्राणेष्वसत्सु किं देहश्चण्डवातेन धार्यते ॥ १०१ ॥
मातुः किंचित्पितुः किंचिदाचार्यात्किचिदाप्यते ।
सम्यग्विनीतैः शास्त्रेषु सर्वं राज्ञस्तु लभ्यते ॥ १०२ ॥
चलन्ति सर्वमर्यादाश्चलिते सति पार्थिवे ।
पर्वता अपि कम्पन्ते प्रसक्ते कम्पने भुवः ॥ १०३ ॥
पत्न्या मङ्गल्ययोगेन पत्युरायुः प्रवर्धते ।
प्रकृतीनां तु भाग्येन पार्थिवः सुखमेधते ॥ १०४ ॥
निर्मितं शतकं साग्रं नीलकण्ठेन यज्वना ।
सभारञ्जनमेतेन साधयन्तु मनीषिणः ॥ १०५ ॥

इतिश्रीभरद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठापनाचार्यचतुरधिकः शतप्रबन्धनिर्वाहकमहाव्रतयाजिश्रीमदप्पयदीक्षितसोदर्यश्रीमदाच्चादीक्षितपौत्रेण श्रीनारायणदीक्षितात्मजेन श्रीभूमिदेवीगर्भसंभवेन श्रीनीलकण्ठदीक्षितेन विरचितं सभारञ्जनशतकम् ।

---

## महाकविश्रीकालिदासकृता
## नवरत्नमाला[1] ।

ॐकारपञ्जरशुकीमुपनिषदुद्यानकेलिकलकण्ठीम् ।
आगमविपिनमयूरीमार्यामन्तर्विभावये गौरीम् ॥ १ ॥

---

१. देवीस्तुतिरूपोऽयं ग्रन्थः.

दयमानदीर्घनयनां देशिकरूपेण दर्शिताभ्युदयाम् ।
वामकुचनिहितवीणां वरदां संगीतमातृकां वन्दे ॥ २ ॥
श्यामलिमसौकुमार्यामानन्दामन्दसंपदुन्मेषाम् ।
तरुणिमकरुणापूरां मदजलकल्लोललोचनां वन्दे ॥ ३ ॥
नखमुखमुखरितवीणानादरसास्वादनवनवोल्लासम् ।
मुखमम्ब मोदयतु मां मुक्ताताटङ्कमुग्धहसितं ते ॥ ४ ॥
सरिगमपधनिरतां तां वीणासंक्रान्तकान्तहस्तान्ताम् ।
शान्तां मृदुलस्वान्तां कुचभरतान्तां नमामि शिवकान्ताम् ॥ ५ ॥
अवटुतटघटितचूलीपालीं तालीपलाशताटङ्काम् ।
वीणावादनवेलाकम्पितशिरसं नमामि मातङ्गीम् ॥ ६ ॥
वीणारवानुषङ्गं विकचमदामोदमाधुरीभृङ्गम् ।
करुणापूरतरङ्गं कलये मातङ्गकन्यकापाङ्गम् ॥ ७ ॥
मणिभङ्गमेचकाङ्गीं मातङ्गीं नौमि सिद्धमातङ्गीम् ।
यौवनवनसारङ्गीं संगीताम्भोरुहानुभवभृङ्गीम् ॥ ८ ॥
मेचकमासेचनकं मिथ्यादृष्टान्तमध्यभागं तम् ।
मातस्तव स्वरूपं मङ्गलसंगीतसौरभं मन्ये ॥ ९ ॥
नवरत्नमालिकाख्यां विरचितमातङ्गकन्यकाभूषाम् ।
यः पठति लिखति वैतां स भवेद्वागीश्वरः साक्षात् ॥ १० ॥

इति महाकविश्रीकालिदासकृता नवरत्नमाला समाप्ता ।

---

१. सरिगमेति सप्तस्वरसूचकान्यक्षराणि. २. खिन्नाम्. ३. 'तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात्.'

॥ श्रीः ॥

# काव्यमालाप्रशस्तिः ।

## (द्वितीया ।)

जयपुरसंस्कृतपाठशालाध्येतृहरिवल्लभभट्टेन
विरचिता संशोधिता च ।

साधुर्जनः पश्यतु काव्यमालाप्रशस्तिमेतामिति नाथ याचे ।
कदापि मास्यां पततु प्रचण्डा शनैश्चरस्येव शठस्य दृष्टिः ॥

सा च

मोहमय्यां

निर्णयसागरयन्त्रालये मुद्रिता ।

१८८७

इयमत्रधार्या बुधैरनर्घैव ।

॥ श्रीः ॥

# काव्यमालाप्रशस्तिः।

## (द्वितीया।)

जयपुरसंस्कृतपाठशालाध्येतृहरिवल्लभभट्टेन
विरचिता संशोधिता च।

साधुर्जनः पश्यतु काव्यमालाप्रशस्तिमेतामिति नाथ याचे।
कदापि मास्यां पततु प्रचण्डा शनैश्चरस्येव शठस्य दृष्टिः॥

सा च

मोहमय्यां

निर्णयसागरयन्त्रालये मुद्रिता।

१८८७

॥ श्रीः ॥

# ॥ काव्यमालाप्रशस्तिः ॥

भारत्यै धन्यवादोऽस्तु तस्यै यद्गाननिर्णयः ।
गोप्यते[1] हंसशब्देन वल्लकीध्वनिनाथवा ॥ १ ॥
निःशेषभारतीसिद्धिः कवित्ववनदेवता ।
काव्यमाला जयत्येषा चातुरीदानदीक्षिता ॥ २ ॥
काव्यमालानवगृहे विना वास्तुविधिक्रियाम् ।
कृतः प्रवेशः सहसा मम त्वभ्यन्तरात्मना ॥ ३ ॥
हरिवल्लभविप्रेण कवित्वकृतिसिद्धये ।
काव्यमालासरस्वत्याः स्तुतिमन्त्रोऽनुरच्यते ॥ ४ ॥
आगत्य गृह्यतामित्थं येषां रटति चत्वरे ।
प्रापकः काव्यमालाया धन्याः सन्तीह ते नराः ॥ ५ ॥
तदैनां तत्र मुञ्चामि संमोदाम्भोभृतां दृतिम्[2] ।
यदा ज्वलति शोकाग्निर्हृदये तृणमन्दिरे ॥ ६ ॥
भ्रममुद्यानमालायाः काव्यमाला तनोतु वः ।
या क्वचिद्विभ्रमभृता[3] सर्वत्राशोकशालिनी ॥ ७ ॥
अन्तरं महदस्त्येव काव्यभूषणमालयोः ।
यदेकया श्रितं स्वान्तं वपुराक्रान्तमन्यया ॥ ८ ॥
न किंचिल्लब्धयाप्यस्ति शीर्षे मुकुटमालया ।
काव्यमाला गुणवती हृदये विधृता यदि ॥ ९ ॥
अस्याः खण्डा वितीर्यन्ते सद्भ्यः केनापि संभृताः ।
वासुदेवेन देवेभ्यः पीयूषचषका इव ॥ १० ॥
त्यक्त्वा काव्यानि नो भाति राज्ञां पुस्तकसंग्रहः ।
यथा जामातरं हित्वा कुटुम्बं तनयावताम् ॥ ११ ॥

---

१. निहूयत इत्यभिप्रायः २. 'मसक' इति प्रसिद्धाम्. ३. पक्षे पक्षिभ्रमणभृता.

तथा प्रशस्तिकपटादि[1]यं रञ्जितपत्रयोः ।
प्रतिबिम्बितसंस्थाना भित्तौ स्मेरा यथाङ्गना ॥ १२ ॥
अस्यां पृथक्प्रबन्धोऽपि पूर्वग्रन्थसमत्वभाक् ।
[2]तत्ताहग्वृत्तलाभेन नाम्न[3]श्चार्थकृतेर्विना ॥ १३ ॥
दृष्ट्वान्यन्मासिकं हस्ते पु[4]स्तकं यस्यकस्यचित् ।
किमियं काव्यमालेति भ्रान्तिरुत्पद्यते क्षणम् ॥ १४ ॥
अस्ति क्रीडति जागर्ति विभात्यादिक्रियाश्रितम् ।
प्रधानं काव्यमालेति पदं स्यात्कर्तृवाचकम् ॥ १५ ॥
सर्वे स्तुवन्ति विन्दन्ति पुष्णन्तीति क्रियान्वितम् ।
[5]काव्यमालेति निर्णेयं वचनं कर्मकल्पितम् ॥ १६ ॥
[6]सर्वत्र पण्डिताः ख्यातिमायान्तीतिक्रियाहितम् ।
स्यात्काव्यमालेति पदं करणेन विभावितम् ॥ १७ ॥
प्रशस्ति मादृशाः कांचित्तन्वन्तीतिक्रियादृतम् ।
अर्थदं काव्यमालेति नाम स्यात्सांप्रदानिकम् ॥ १८ ॥
ध्वनिं रसमलंकारं वेद्मीत्यादिक्रियागतम् ।
अपदानपदं काव्यमालेति भुवि निश्चितम् ॥ १९ ॥
जपो भवति पाठश्च मूर्छतीतिक्रियाधृतम् ।
प्रसिद्धं काव्यमालेति पदं संबन्धलक्षितम् ॥ २० ॥
सिद्धिरस्ति चिदानन्दश्चश्वतीतिक्रियापदे ।
काव्यमालाधिकरणं निर्णीतं कैर्न वर्णिभिः ॥ २१ ॥
निरन्तरं प्रवर्तस्व चिरायेति क्रियोचितम् ।
काव्यमाले२ इति शुभं संबुद्धिव्यञ्जकं वचः ॥ २२ ॥
[7]कारा का काव्यरत्नानां व्यवसायकरी च का ।
माननीया च का विज्ञैर्लाभहेतुश्च का मता ॥ २३ ॥

१. माला. २. इदं च पूर्वग्रन्थसमत्वभाक्त्वे हेतुः. ३. ग्रन्थनामतोऽर्थकरणाच्च विना. ४. काव्यमालातिरिक्तं विद्योदयग्रन्थरत्नमालादि. ५. काव्यमालामिति विवक्षितमिति बोध्यम्. एवमग्रेऽपि तत्तत्कारकानुवाचकं बोधनीयम्. ६. वर्धते. ७. अत्र चतुर्णां प्रश्नानामुत्तरं पादचतुष्टयाद्यक्षराण्यादाय संपन्नेन 'काव्यमाला' इति पदेन देयम्.

प्रतिवेशिबुधागारेऽप्यागमात्तव सांप्रतम् ।
मोदन्ते मादृशाः केऽपि त्वत्सौरभ्यवशीकृताः ॥ २४ ॥
यद्यद्विलोकितं स्वप्ने त्रिदशालयगोचरे ।
तत्सर्वमिह कर्णाभ्यामहह श्रुतमेव मे ॥ २५ ॥
तत्तद्दर्शनरूपे भक्ष्ये भुक्तेऽथ तृषि च जातायाम् ।
हरिवल्लभभिषजा तु प्रपीयते काव्यमालिकास्वरसः ॥ २६ ॥
संस्कृतपुस्तकमेतत्प्रतिमासं भवति मित्र विख्यातम् ।
किं च प्राचीनोत्तमदुर्लभकाव्यादिसंग्रहोऽत्र तथा ॥ २७ ॥
ये ग्रन्थाः सव्याख्या मुद्यन्ते ते तु तद्विधा एव ।
दुर्बोधानां तेषां निर्व्याख्यानां च टिप्पणं क्वापि ॥ २८ ॥
कविदेशकालनामग्रन्थप्रभृतिप्रधारणं सर्वम् ।
संसूच्यते यथामति कर्त्रा केनापि तत्ख्यातेः ॥ २९ ॥
एतद्ग्रहणे येषां वाञ्छा ते प्रेषयन्तु मूल्यानि ।
मुम्बय्यां काल्याः पथि निर्णयसागरजगत्प्रथितयन्त्रे ॥ ३० ॥
मासे यस्मिन्माला काव्यानां यत्र यत्र गतिमीष्टे ।
किं तत्र तत्र दृष्टा विद्वद्भिस्तदधिदेवता साक्षात् ॥ ३१ ॥
एवंविधं हि जालं रसिकमनोमृदुलमत्स्यशिशुहृतये ।
संसाराम्बुधिमध्ये निःक्षिप्तं धीवरेण केनापि ॥ ३२ ॥
नानाविधसरसीभ्यो विलक्षणा काव्यमालिकासरसी ।
सततं यन्मग्नानां जाड्यं न हि बाधते पुंसाम् ॥ ३३ ॥
केनापि दैववेत्रा सरस्वतीमासपत्रिका किमियम् ।
आरब्धास्ति विधातुं सूचितचिरजीवनख्यातिः ॥ ३४ ॥
स्वयमेव कमपि काव्यग्रन्था आयान्ति किं विचिन्त्यैवम् ।
कथमेषा माला स्यात्त्यक्त्वास्मादृशमणीभूतान् ॥ ३५ ॥
मञ्जूषिकेव किमियं गीर्नृत्यभ्रष्टनूपुरमणीनाम् ।
संभाव्यते मयैवं बहुवर्णे काव्यमालिके भवती ॥ ३६ ॥

काव्यानां मालायां यल्लिखितं केनचिद्ध्रुवं तदिदम् ।
प्राचीनकवितृकीर्तिप्रगल्भराड्यन्वयस्तवनम् ॥ ३७ ॥
उत्तमपत्रप्रेष्ठा विधातृहंसप्रवेणिका किमसौ ।
हृत्सौधास्तरणकृते मया तु विक्रीयते सहसा ॥ ३८ ॥
स्वयमेव पदं नटयति हरिवल्लभबुद्धिवारवनितेयम् ।
तन्त्र्यामिव रणितायां कविपरिषदि काव्यमालायाम् ॥ ३९ ॥
प्राप्ता अपि निशि चौरास्त्वत्संबन्धिप्रलापतो गेहे ।
जागर्ति कोऽपि नन्विति मत्वा सद्यः पलायन्ते ॥ ४० ॥
प्रौढवचाः कविलोकः कुरुतात्षड्ऋतुश्रियश्चिरं स्तवनम् ।
निश्चित्य तत्सदृश्या अथवास्याः काव्यमालायाः ॥ ४१ ॥
हे काव्यानां माले तुभ्यं त्वत्स्तोत्रकीर्तनोत्काभिः ।
वयमिच्छामस्त्वामिति संदिष्टं शौरिपत्नीभिः ॥ ४२ ॥
अयि सख्यः संप्रति ननु ममावकाशस्तिरोहितः प्राज्ञैः ।
इदमुत्तरं हि तत्र प्रेषयितव्यं त्वयास्त्युचितम् ॥ ४३ ॥
व्रतमनशनरूपं यज्जीवनसंदेहकरणमूह्यं तत् ।
कुर्वन्ति ये च तदथो भुक्तं विन्दन्ति ते न काव्यसुखम् ॥ ४४ ॥
ये सूरयस्तपोबलकृतयत्ना द्रष्टुमप्सरोरूपम् ।
ते न स्मरन्ति तदहो वीक्ष्य परं काव्यमाले त्वाम् ॥ ४५ ॥
आभ्यन्तरसंकीर्णो नित्यघनः काव्यमालिकानन्दः ।
अहह बहिरेष भाति प्रशस्तिकपटेन किमिदानीम् ॥ ४६ ॥
जीवनहेतोर्जगतामिन्दोरपि रसविसर्जनावसरे ।
या भवति काव्यमाला सहायिनी सा तु वन्द्यैव ॥ ४७ ॥
मान्त्रिकपुरुषा मन्त्रैः कुलाङ्गनावशविधौ किमन्यैः स्यात् ।
आशुचमत्कृतिकारं त्यक्त्वा श्रीकाव्यमालिकामन्त्रम् ॥ ४८ ॥
शिवदृगनलेन कामे भस्मीभवति स्मृतं न तद्वत्या ।
यत्काव्यमालिकाया गतासुरपि जीवति श्रवणात् ॥ ४९ ॥

१. संबोधनम्.

दुःखग्रीष्मे विबुधा भवतीमेव श्रयन्ति ननु यस्मात् ।
माले त्वं काव्यानाममृतरसस्य प्रपापाली ॥ ९० ॥

सुचिरं मरुदेशभामिनीनवसंभोगसुखं यदुत्थितम् ।
सहसा तदधःकृतं क्षणात्प्रसभं संप्रति काव्यमालया ॥ ९१ ॥

निर्जराधिपतिवारवधूभिः शिक्ष्यते कथमहो न कवित्वम् ।
शीघ्रमेव ननु येन मुनीनां तानि तान्यपि चलन्ति तपांसि ॥ ९२ ॥

विख्याता क्वचिदपि कुट्टनीमतेन
लोकाधिष्ठितमृदुपृष्ठभूरिपत्रा[1] ।
निःशेषस्तुतदृढबन्धनप्रकारा[2]
भात्येषा जयनगरीव काव्यमाला ॥ ९३ ॥

संगृह्याभिनवविनिर्मित स्वकीयां
भान्त्येते किमहह हन्त मासि मासि ।
आशङ्कामिति वितरन्ति काव्यमाले
ग्रन्थास्ते हृदि मम पूर्णभावशून्याः ॥ ९४ ॥

श्रुत्वालीमधुरनिरुक्तकाव्यमाला-[3]
वक्रोक्तिं शिखरिसुता प्रिये पुरःस्थे ।
संवेशप्रलपनवृत्तमावयोः किं
सोत्साहं श्रुतमनयेति निर्दधार ॥ ९५ ॥

युष्मत्प्रभावजनुषः किल काव्यमाले
ये ये पदं निदधते हृदि मे विकल्पाः ।
सन्ति स्तुतिप्रणयने विनिवेश्यमाना-
स्ते ते मयापि बहुधा भवदीयकाव्ये ॥ ९६ ॥

---

१. पुरीपक्षे श्लोकैरुपचारेण यशस्विभिरधिष्ठितान्यारूढानि मृदुपृष्ठानि बहुवाहनानि यस्याम्. २. प्रसिद्धं हि तावदिदं यदेषा पुरी दृष्टबहुनगरीकैः पान्थैर्विस्मयेन संस्तूयते इति. ३. पार्वती स्वसखीमधुरनिरुक्तकाव्यमालावक्रोक्तिमाकर्ण्य प्रिये पुरःस्थे सति, 'आवयोः संवेशप्रलपनवृत्तमनया श्रुतं किम्' इति निश्चिकाय. एतेन काव्यमाला तत्र निरन्तरमभ्यस्यत इति व्यज्यते.

वाण्या गृहे नियतवर्णगृहप्रतिष्ठे
दृष्टिप्रियाः स्थितिदृढा इव नागदन्ताः ।
पृष्ठश्रिताङ्कनिवहाः प्रतिपत्रकोणे-
ष्वाभान्ति मञ्जुलरुचस्तव काव्यमाले ॥ ९७ ॥
सत्यं स्तुत्यं यच्च सदा तस्य तु नूनं
सामान्यैव स्तोत्रकृतिः स्यात्सकलेषु ।
मासे मासे कामयते यद्व्यतिरेकं
शुश्रूषास्याः काचिदियं विद्वदुपात्ता ॥ ९८ ॥
राजा नीतिं भुवि ननु धिनुतान्नीतिः प्रीतिं परिषदि सिनुतात् ।
प्रीतिश्चैनां चिरमथ हिनुतात्कीर्तिं चैषा क्वचिदपि चिनुतात् ॥ ९९ ॥
अधुनाखिले जगति काव्यमालाभिधा
ननु काप्यसौ श्रयति यत्र यत्र स्थितिम् ।
इति कोविदैरथ च तत्र तत्रोदितं
किमु जङ्गमा धिषणवैजयन्ती त्वियम् ॥ ६० ॥
परिणतशुभकाले वृत्तशाले वरिष्ठे
चलितचटुलचाले श्रीलभाले मदिष्टे ।
विरचितगुणजाले ब्रह्मबाले प्रशस्ते
रसिकजनरसाले काव्यमाले नमस्ते ॥ ६१ ॥
सर्वोत्कण्ठां द्रढयति देशे देशे लाभोपायं कथयति पूर्णं तूर्णम् ।
नानारूपं जनयति वैलक्षण्यं काचित्सिद्धिर्नहि नहि काव्यश्रेणी ॥ ६२ ॥
सुधार्णव वृथा मदं स्पृहयसे कथं सरसभावतस्त्रिभुवने ।
भवत्सदृशतोदृशा ननु सखे कवित्वनिवहा न सन्ति भुवि किम् ॥ ६३ ॥
किं न दधाति लेखलहरीं न किमु नववयो
भाति न किं नरैर्न च तथा किमु धनदरसात् ।
काचिदियं तथापि गणिका नटति सुमनसां
स्याद्यदि गीतिगर्वकथनं तदपि किमिह नो ॥ ६४ ॥

१. बृहस्पतिपताका. २. सरसाः. ३. पक्षे देवलहरीम्. ४. नलकूबररसात्. ५. रम्भा. ६. देवानाम्. ७. प्रसिद्धैव गीतिरार्याभेदः.

यदिह जनः क्वचिद्व्रजति शौचमथो शृणुते मृधस्तुतिं
भयचकितो मिथो विकुरुते क्व च रौद्रकथां करोत्यहो ।
क्व च करुणां तथा भवति विस्मयवान्हसनं क्व चाश्नुते
ननु किमियं ततोऽनु कुरुते भुवनं भुवि काव्यमालिका ॥ ६५ ॥
यन्निटिलेन वृत्ततिलकं मणिरथकराभ्यां
संप्रति मस्तकेन मुकुटं धृतमिह चकास्ति ।
निश्चितमस्मि केवलमहं गतविभवमिति
त्वं तु न चिन्तयेर्यदनयासि हृदय सहितम् ॥ ६६ ॥
सुरतसुखं हि तच्च परिणामशोचनीयं मतं
छलमिलितं सखे क्षणिकमेव राजकीयं सुखम् ।
सुखमथ मौक्तिकं भवविरुद्धमूहनीयं तथा
ननु निखिलप्रकारहितदायि काव्यमालासुखम् ॥ ६७ ॥
निलीनकुररीरुता विलसिताश्वधाटीच्छटा
विकीर्णहरिणीगणा द्रुतभुजंगयातक्रिया ।
विवर्तितरथोद्धता श्रुतिविहारिहंसीरवा
विभाति मृगयास्थली कथय काव्यमाला किमु ॥ ६८ ॥
करजलरुहाभ्यर्णे कश्चित्तदङ्कतलस्थले
वदननिकटे कश्चित्कश्चिच्च पृष्ठदृढाश्रये ।
अतिशयितसंतत्या मातुर्यथाखिलबालका-
स्तदिव किममुष्या भान्तीतस्ततः कविताक्रमाः ॥ ६९ ॥
बुधव्याधश्रेष्ठा न किमपि भवन्मङ्गुगतिभि-
र्न चापि व्याजानां विविधकृतिभिः काङ्क्षितसुखम् ।
कवित्वाख्यं गानं प्रकटयत यूयं तु शनकैः
प्रयान्त्येते यस्मान्नृपतिहरिणा हन्त वशताम् ॥ ७० ॥
एनां केऽपि सरस्वतीत्यथ परे लक्ष्मीरिति प्रोचिरे
शर्वाणीत्यपरे तथा सुरनदीत्येवं पुनः केचन ।

---

१. मालया.

आश्चर्यं कतिचिद्बुधाश्च जगदुर्लोकत्रयीति स्फुटं
साहित्यप्रभुकामिनीत्यथ जगे निःशङ्कमुच्चैस्त्वहम् ॥ ७१ ॥
अन्यद्वीपकृते नियामकनरैः प्रस्थापिता लीलया
नानावस्तुविशेषसंभृततला नौकासमूहा इव ।
अस्मात्पुस्तकसंग्रहात्कतिपये ग्रन्थाः पृथङ्निःसृता-
स्तत्तत्सप्तशतीमुखा विदधते मच्चित्तमोदोच्चयम् ॥ ७२ ॥
सत्कारस्य कृते प्रसन्ननृपतेराह्वानमप्यादरा-
दारामे कुसुमापलापितनिशादीपेऽपि च क्रीडनम् ।
व्याख्यानावसरे चिरादथ भवन्मध्येसभं श्लाघनं
दूरापास्तमिदं हि सर्वमधुना काव्यार्थसंपत्तिभिः ॥ ७३ ॥
आकृष्येत तया विलासिहृदयं किं ग्रन्थरत्नस्रजे-
त्येवं खेदमपाकुरुष्व झटिति त्वं काव्यमालेऽधुना ।
एषा मत्कृतिचेटिका तव गुणांश्चैतन्यदानोद्धुरा-
न्यद्गास्यत्यधिकृत्य तां जडमयीं धिक्कारदीक्षाविधौ ॥ ७४ ॥
कस्मिंश्चित्समये पिकस्तु तनुते संदिग्धहृद्यं कलं
धत्ते काव्यमिदं सदैव मधुरं स्पष्टार्थजाग्रद्ध्वनिम् ।
सत्येवं ननु पक्षपातविमुखः कोऽपि प्रकर्षोदयः
काव्यस्यैव महाकवेः श्रमजुषः सर्वत्र बम्भ्रम्यते ॥ ७५ ॥
स्थानं कुत्र ममेत्यनेन विदितं योग्यं गुरोर्वल्लभे
कस्मात्त्वं हरिवल्लभस्य कविते ग्लानिं वृथालिङ्गसि ।
खेलत्कोमलपल्लवप्रविलसत्पल्यङ्किकालंकृतं
त्वत्स्थानं तु विभाति मुग्धहृदये यत्काव्यमालास्तुतिः ॥ ७६ ॥
औपेक्ष्यं विदधातु भूरिविभवः स्वच्छन्दमुर्वीश्वरः
स्वर्धेनुश्च यथा तथागतवती वैमुख्यमल्पीयतु ।
नूनं नृत्यमपि प्रगल्भगणिकापुत्रीकृतं मास्तु चे-
त्सर्वैतच्चरिताधिकप्रणयिनी श्रीकाव्यमालादृता ॥ ७७ ॥

योषिद्भूषणशिञ्जितेन मुमुदे श्रोत्रद्वयं केवलं
दृग्युग्मं च हरीक्षणेन फलिनी सौरभ्यतो नासिका ।
पक्वाम्रप्रपतद्रसेन रसना चित्तं तु नो केनचि-
त्तद्युक्तं निखिलेन्द्रियं च मुदितं श्रीकाव्यमालाश्रयात् ॥७८॥

अस्यां[1] कश्चिदपि ब्रवीति न कथं हृद्यं सभायां वचः
श्रोतारश्च न मन्वते तदुदितं किं श्रोत्रमैत्रीप्रियम् ।
केषांचिद्वदतां शनैरिति मिथः श्रुत्वा क्षणं जल्पनं
त्वत्स्तोत्रं हरिवल्लभेन रटितं हे काव्यमाले पुनः ॥ ७९ ॥

भो जिह्वे बहु संस्कृतासि पठनैर्नानाप्रकारैर्मया
कालं प्राप्य च षड्रसैरपि चिरं तृप्तिं प्रति प्रापिता ।
स्वैरं कारयितं तथैव पुरुहु[2] त्वज्जल्पनं संप्रति
प्राप्तोऽयं समयस्तदेधि[3] सुखिनी यत्काव्यमालास्तुतेः ॥८०॥

ध्याता यौवनसान्द्रगुम्फितवटीकृष्टाः स्त्रियो यद्यपि
स्थेष्ठं किंच नियोगसत्यनियमं साचिव्यमालम्बितम् ।
ज्ञातं सिद्धरसायनं किल तथाप्येषा तु वाञ्छास्त्यहो
यत्काव्यामृतवारिणा भवतु मे स्नानोत्सवः सर्वदा ॥ ८१ ॥

एकस्मिन्नगरे क्वचित्प्रकटिता सर्वत्र यद्दृश्यते
प्रत्यक्षं पुरतः स्थितापि हृदये नृत्यत्यहो सर्वदा ।
नानात्वं किल सेवतेऽथ युगपच्चैकापि निःसंशयं
सैषा कापि विलक्षणैव गणिका निर्णीयते मादृशैः ॥ ८२ ॥

नानास्त्रीजनगीतबोधमधुरः स्थात्स्नुर्विवाहोत्सवः
संबन्धिश्रितहर्षसूचनपटुः संतानजन्मोत्सवः ।
तत्तत्कौतुकसंभृतो जयपुरीपर्यन्तमेलोत्सवः[4]
नैतद्वेद्म्यहमेतदुत्सवपुरः कस्मान्त्रपामाप्नुते ॥ ८३ ॥

---

१. अत्र प्रस्तुतालंकारः. २. अधिकम्, ३. भव. ४. अत्र हि दृश्यन्ते बहवोऽनवरतं तादृशा मेलोत्सवाः.

किं योषाविरहेण वाञ्छसि वृथा मन्मित्र शोच्यां गतिं
क्रीडन्तीं ननु पश्य मञ्जुलगुणां श्रीकाव्यमालामिमाम् ।
त्यक्त्वा सा तु नवीनतां कलयति प्राचीनभावं क्रमा-
देषा प्रत्युत तं विहाय भजते प्रत्यग्रतां प्रत्यहम् ॥ ८४ ॥
काव्यग्रन्थविधायिकीर्तिलतिकासेकक्रियापेशलः
खेदच्छेदनजागरूकमहिमा श्रीकाव्यमालाफलः ।
सर्वेषां कृतिनां प्रसादकृतये क्रान्तप्रतिज्ञाक्रमः
काशीनाथकृपः स कोऽप्युदयते दुर्गाप्रसादोद्यमः ॥ ८५ ॥
एतत्कोमलबाह्यपत्रनिहिता वर्णा गृणन्ति श्रियं
गीःप्रासादगवाक्षभित्तिखचितच्छिद्रप्रगल्भोपमाम् ।
संसक्तं दृढरक्षकं च किमपि प्रच्छादनं सर्वतो
बद्धस्य श्रयते तथा जवनिकापट्टस्य लीलाभ्रमम् ॥ ८६ ॥
नेतृभ्यः सकलेषु कर्मसु फिरङ्गिभ्यः शुभं ब्रूमहे
सीत्कारश्रवणं च पुस्तकपिशाचेभ्यश्चिरं चिन्महे ।
विद्वांसं व्रजलालसूनुमहहो काव्योदधिं मन्महे
किं किं वीक्ष्य न कुर्महे प्रतिदिनं त्वां काव्यमाले वयम् ॥ ८७ ॥
गुप्तं यद्यपि वस्त्वभिज्ञपयते सालोकवृत्तेरतः
सङ्केतोरियमस्ति काव्यपटली तुल्यैव दीपावलेः ।
अस्माभिश्च परंतु कश्चिदमुयोर्भेदोऽयमावेद्यते
यत्स्नेहं प्रथमा तनोत्यथ परा क्षीणाति पत्राश्रितम् ॥ ८८ ॥
या प्रीणाति मनो जपन्ति च चिरादुत्कण्ठिता यां बुधाः
प्रेक्षा प्रीतिपरा यया कलयते यस्यै स्पृहां भारती ।
यस्याः कीर्तिमवाप कर्तृककुलं यस्याः कथा पावनी
यस्यां भक्तिरुदेति सा विहर भोस्त्वं काव्यमाले सदा ॥ ८९ ॥
शीघ्रं सज्जनरञ्जनं हृदि चमत्कारोच्छ्रयः संविदां
तत्तत्सद्वरपूरणी भगवती मूर्ताथ साक्षाच्च गीः ।

शोभा सात्त्विकता च शर्म सुकृतं स्यात्सिद्धिसत्त्वं गुरो
कस्माच्छिष्य तदेतदुक्तमखिलं श्रीकाव्यमालाजपात् ॥ ९० ॥
प्राप्तायां होलिकायां विलसति च शनैः फाल्गुने मत्तमासे
क्रीडा चेद्बाल्यभाग्भिर्निखिलकविसुतैः कापि शश्वद्विधेया ।
स्वच्छन्दं ते तदा तां विदधतु नितरां नात्र किंचिद्विचार्यं
प्राचीनं काव्यमालाप्रचुररसमहामादकद्रव्यमाप्त्वा ॥ ९१ ॥
श्रीमन्मञ्जुप्रबन्धाभिधमलयभवा चारुचर्याक्षताढ्या
क्षेमेन्द्रोक्तिप्रसूनामृतलहरिपयोभाजना स्तोत्रधूपा ।
काव्यालंकारदीपा हरविजयमहास्वादुनैवेद्यपूर्णा
वाग्देवीपूजनार्थं करकमलगता दृश्यते स्थालिकेयम् ॥ ९२ ॥
संमूर्च्छद्वस्तुभावं विलसितकलिकं शेखरव्याप्तकोणं
प्रोत्फुल्लत्कर्णपूरं बहुविधचरितं गुच्छकच्छन्नमध्यम् ।
सूत्रान्तप्रोतपत्रं विविधदरदलन्मञ्जरीमञ्जुपुञ्जं
शीर्षे गीःपुष्पलाव्या[1] विहरति किमिदं टेप्परं[2] काव्यमाला ॥९३॥
यत्प्रासादान्नृपाणां दृगुदयकरणान्वीक्षितुं लोलभाव-
स्तत्तन्माहात्म्यकल्पद्रुममिलनकृते यच्च भूरिप्रयत्नः ।
काप्येषा काव्यमाला यदवधि न मयारोपिता हृत्प्रदेशे
तावत्पर्यन्तमेवं किमपि चिरमिदं जातमासीच्चरित्रम् ॥ ९४ ॥
प्रोद्भिद्यत्काव्यमालाह्वयमृदुलतातत्प्रशस्त्युक्तपद्य-
श्रीमत्फुल्लप्रसूनप्रतिदिगनुसरद्धृद्यसौन्दर्यगन्धम् ।
हे तत्तद्दुर्जनोक्तिस्फुटकटुबृहतीपूतिगन्धाप्रसन्ना-
श्चित्तानन्दाय यूयं ननु सपदि समाजिघ्रतास्मद्वयस्याः ॥ ९५ ॥
यस्यानुद्धाटनात्तु व्रजति विशरतामान्तरस्तीव्रतापो
बाह्यश्चोद्धाटनादप्यहह न सहसा सेवते नाशभावम् ।
काव्यच्छत्रस्य तस्याद्भुतविभववतश्छायया जीविनो ये
ते केऽपि प्रौढिमन्तः कथमिह कवयो न श्रयेरन्यशांसि ॥ ९६ ॥

१. सरस्वतीमालाकाराङ्गनायाः. २. वंशपात्रम्.

कालिङ्गस्य ध्रियन्ते किमु निबिडसुधासिन्धुतीरोपभिभाज-
स्तैः पक्वस्यासिधेनुक्षतमृदुकलिकालाभसंपद्विलासाः ।
फुल्लाम्भोजच्छदानां सकुतुकमथवा किं पृथक्कृत्यभिख्या
दीर्यन्ते पुस्तकस्य ग्रथितकिशलया यैर्मिथोऽमुष्य यत्नात् ॥ ९७॥
निःशेषं भ्रातृगेहे मिलितुमधिगतं मातृमुख्यं कुटुम्बं
भृत्यव्रातश्च जातः स्वभवननिरतो हन्त सेवां विधाय ।
नायाता दैवयोगात्परिचितसुहृदो नित्यकेलीजुषोऽपि
त्वं तस्मात्काव्यमाले भव मम भयिनः सांप्रतं धैर्यधात्री ॥ ९८॥
का मान्या काव्यमाला श्रुतिसुखकरणे का श्रुता काव्यमाला
दृश्या का काव्यमाला सकलरसमयी भाति का काव्यमाला ।
का चिन्त्या काव्यमाला बहुविभवकरी मित्र का काव्यमाला
वन्द्या का काव्यमाला हृदयमदवहा का मता काव्यमाला॥९९॥
धीस्त्रीबिब्बोकमाले विविधनवरसप्रोल्लसद्भाण्डमाले
लक्ष्मीदृक्पातमाले जयनगरलसत्सौधसंपन्नमाले ।
ब्राह्मीमञ्जीरमाले सुरपतिमहिलासिक्तमन्दारमाले
कामस्त्रीगीतिमाले तव भवतु शुभं शाश्वतं काव्यमाले ॥ १०० ॥

---

## ॥ अथ विलम्बाष्टकम् ॥[1]

अवधिदिनविलम्बहेतुशङ्काक्षणिकविशुष्यदुपेतसूक्ष्मपङ्कान् ।
अभिगमनजलात्कदा न जाने स्नपनविधौ कृतिनः प्रयोक्षसे त्वम् ॥ १ ॥
प्रायो लब्धप्रचुरसरसग्रन्थतारुण्यपुण्या
योग्ये काले यदनुभवितुं गर्भमेषा दधार ।
अद्य प्राप्तः प्रसवसमयोऽभूतपूर्वः किलैतां
चित्तं हेतुः स्पृशति तदयं काव्यमालाविलम्बे ॥ २ ॥
गच्छेयं नु नवोक्तिमानिषु कथं प्रत्नोक्तियोगिन्यहं
मत्वैवं क्रियते विलम्बनमिदं यत्काव्यमाले त्वया ।

---

१. कदाचित्संकेतिते समयेऽनागतामेनामुद्दिश्य कृतमिदमष्टकम्.

तद्योग्यं न यतः सदैव भवती निर्मथ्य तेल्लालसां
शीघ्रं मोहयितुं प्रसह्य ननु तेऽशक्तास्ति तादृश्यपि ॥ ३ ॥
तत्तच्छ्रव्यविचित्रभूर्यभिनवोदन्तार्चितश्रावणा
यासौ मित्र ममागताद्य न कथं सा काव्यमालाप्रिया ।
तां जानीहि रजस्वलामिति न चेज्जातः किलेयान्कुतो
विश्लेषात्क्रियमाणसर्वरसिकारम्भो विलम्बोदयः ॥ ४ ॥
केनाप्यध्वनि किं श्रिता त्वमुपभोक्तुं स्थापयित्वा रथे
किंवा जम्भरिपोः प्रसन्नकृतये देवैर्दिवं धाविता ।
संकेतस्मृतिनिर्दया किमथवा न प्रस्थितैवालया-
त्त्वामुद्दिश्य विलम्बितामिति शपे हे काव्यमालेऽङ्गने ॥ ५ ॥
दोर्भ्यां न त्वमुपेक्षिता क्षणमपि प्रेम्णो गरिम्णो मया
हृन्मध्यादवतारिताथ न कदाप्यद्यावधि प्रेयसि ।
किं च प्रत्युत रक्षितैव विविधैस्तैस्तैरुपायैः सदा
दीर्घं हन्त विलम्बिता पुनरपि त्वं काव्यमाले कुतः ॥ ६ ॥
गीर्भ्रान्त्या मदनातुरेण सहसा धात्रानुरुद्धाथवा
सिन्धूत्थामृतभाण्डमोहविवशै रक्षोभिरालम्बिता ।
नानालंकृतिपेटिकाभ्रमधिया किं तस्करैश्चोरिता
स्वर्गोशङ्किभिराहृताथ किमये त्वं काव्यमालेऽधुना ॥ ७ ॥
किं श्रान्ता क्वचिदर्थगौरववशादध्वन्यसि त्वं स्थिता
पान्थं कंचिदपेक्षसे किमथवा त्रासाकुलैकाकिनी ।
लीलार्थं किमिहैव संप्रति यदृच्छान्तर्हिता वर्तसे
नेत्थं माति विलम्बिते मनसि मे ते काव्यमाले भ्रमः ॥ ८ ॥

इति ।

---

श्रीलछूरामसूनोर्जयपुरभिषजः कुन्दनस्यात्मजेन
भूयः श्रीकाव्यमालास्तुतिरियमुदिता या हरेर्वल्लभेन ।

---

१. तेषामाशाम्. २. नवोक्तिमानिनः. ३. निर्णयसागरात्. ४. एतेनामुष्या विचित्रमाहात्म्यं व्यज्यते.

तद्युक्ता काव्यमाला प्रतिदिनमधिकं सेवनाद्धीरबुद्ध्या
विद्वन्मोदं विधत्तां शतमणिखचितस्रग्धरा मुग्धिकेव ॥ १ ॥
अप्यप्रयोजकाः केचिच्छ्लोका विख्यापिता मया ।
विस्मरेद्गणनाकाले स्वान्दुष्टानपि को बुधः ॥ २ ॥
इत्यलं विविधार्थाभिस्ताभिस्ताभिर्मदुक्तिभिः ।
हृद्यापि यदि सामग्री स्यादुच्छिष्टैव चेद्बहुः ॥ ३ ॥

इति शुभम् ।

किं च ।

सदिच्छानिष्कुण्ठं बुधभिदवगुण्ठं जपहितं
नृतुल्योद्यद्वुण्डं कृतदुरितहुण्डं सपदि तम् ।
हृतद्वद्यन्मुण्डं शुभसलिलकुण्डं मृडदिषुं
भजे खेलच्छुण्डं कमपि गजतुण्डं मृडशिशुम् ॥ ४ ॥
कृपापारावारं नृपनयविचाराद्दतबुधं
यशोधारागारं श्रितसुहृदुदाराशयकृतिम् ।
कुलाचाराधारं स्पृहितदृढभारापहृतये
स्तुवे माराकारं कमपि गुरुनारायणमहम् ॥ ५ ॥

इति शुभम् ।

हरिवल्लभभट्टशर्मा
जयपुरे ।

---

कर्णाकल्पककेतकाग्रकुसुमक्रीडद्रजःपाण्डुरे
गण्डे मौक्तिकदामभिर्विलसिता ये मध्यमध्ये मिथः ।
स्पष्टाः केऽपि मुखावगुण्ठनपटीदूरक्रियाधोरणे-
र्वर्ण्याः पल्लवयन्तु दर्शनसुखं तेऽमी चिरं वोऽलकाः ॥ १ ॥
कैटाह्या आनुपूर्वीकं तलात्संप्रति पूपकाः ।
निष्कास्यन्ते च कतिचित्पात्यन्ते च यथायथम् ॥ २ ॥

---

१. रूपकातिशयोक्त्या काव्यमालावर्णनमिदम्. २. काव्यमालाया इत्यभिप्रायः. ३. इदमपि रूपकातिशयोक्त्या वर्णनम्.

# KÂVYAMÂLÂ.

A collection of old and rare Sanskrit Kâvyas, Nâtakas, Champûs, Bhâṇas, Prahasanas, Chhandas, Alankâras &c.,

## PART V.

EDITED BY

PANDIT DURGÂPRASÂD

AND

KÂS'ÎNÂTH PÂṆDURANG PARAB.

PRINTED AND PUBLISHED

BY

THE PROPRIETOR

OF

THE "NIRṆAYA-SÂGARA" PRESS

BOMBAY.

1888.

*Price* 1 *Rupee.*

॥ श्रीः ॥

# काव्यमाला

नाम

नानाविधप्राचीनकाव्यनाटकचम्पूभाणप्रहसन-
च्छन्दोलंकारादिसाहित्यग्रन्थानां
संग्रहः ।

पञ्चमो गुच्छकः ।

जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना पण्डित-
दुर्गाप्रसादेन, मुम्बापुरवासिना परबोपाह्व-
पाण्डुरङ्गात्मजकाशिनाथशर्मणा च
संशोधितः ।

स च

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतः ।

१८८८



मूल्यमेको रूप्यकः ।

# अनुक्रमाणिका ।

# काव्यमाला।

## महाकविश्रीमूककृता
## पञ्चशती।

कटाक्षशतकम्।

मोहान्धकारनिवहं विनिहन्तुमीडे
मूकात्मनामपि महाकवितावदान्यान्।
श्रीकाञ्चिदेशशिशिरीकृतिजागरूका-
नेकाम्रनाथतरुणीकरुणावलोकान्॥ १॥
मातर्जयन्ति ममताग्रहमोक्षणानि
माहेन्द्रनीलरुचिशिक्षणदक्षिणानि।

१. अयं द्रविडदेशोद्भवः कविः कदा बभूवेति न निश्चयः, किं तु नायमतिप्राचीन इति भाति. काञ्चीपुराधिष्ठात्र्याः कामाक्ष्याः स्तुतिरूपेयं पञ्चशती विरलप्रचारैवास्ति. जीवानन्दभट्टाचार्येणेयं कलिकातानगरे मुद्रयितुमुपक्रान्ता. परं तेन च कथमप्यशुद्धं शतकचतुष्टयं मुद्रयित्वा पञ्चमं शतकमलभमानेन संख्यापूरणाय तत्र महिषशतकं मुद्रितम्. अन्येन तु केनचन नाद्याप्ययं ग्रन्थः प्राकाश्यं नीत इत्यस्माकं मुद्रणारम्भः. पुस्तकचतुष्टयाधारेण चास्माकं पुस्तकशोधनोपक्रमः. तत्र प्रथमं पञ्जाबदेशान्तर्वर्तिन्यमृतसरोनाम्नि नगरे वर्तमानानां काश्मीराभिजनानां श्रीरामचन्द्रपण्डितानां प्रत्नपुस्तकात्प्रतिरूपकं गृहीतं नातिशुद्धं क-चिह्नितम्. द्वितीयं जयपुरमहाराजाश्रितानां पण्डितश्रीसरयूप्रसादशर्मणां पुस्तकं प्रायः शुद्धं नवीनं ख-चिह्नितम्. तृतीयं केरलीयसदाशिवशंकरशास्त्रिणां कश्मीरलिखितं नवीनं शुद्धं ग-चिह्नितम्. चतुर्थं जयपुरीयजैनपाठशालाध्यापकद्रविडकाशिनाथशास्त्रिणां प्राचीनमिवोपलक्ष्यमाणं नातिशुद्धं घ-चिह्नितम्. अस्मिन्पुस्तकचतुष्केऽप्यशुद्धतामपहाय भूयान्पाठभेदो नास्ति. केवलं शतकोपन्यासभेदो वर्तते. तत्र क-ख-पुस्तकयोः (१) मन्दस्मितशतकम्, (२) पादारविन्दशतकम्, (३) आर्याशतकम्, (४) कटाक्षशतकम्, (५) स्तुतिशतकम्, अयं क्रमोऽस्ति. ग-पुस्तके (१) पादारविन्द०. (२) आर्या०, (३) कटाक्ष०, (४) मन्दस्मित०, (५) स्तुति०, अयं क्रमः. घ-पुस्तके (१) कटाक्ष०, (२) मन्दस्मित०, (३) पादारविन्द०, (४) आर्या०, (५) स्तुति०, अयमस्मदनुसृतः क्रमोऽस्ति. २. एकाम्रनाथः काञ्चीपुराधिष्ठाता महेश्वरः.

कामाक्षि कल्पितजगत्त्रयरक्षणानि
त्वद्वीक्षणानि वरदानविचक्षणानि ॥ २ ॥
आनङ्गतन्त्रविधिदर्शितकौशलाना-
मानन्दमन्द[1]परिघूर्णनमन्थराणाम् ।
तारल्यमम्ब तव ताडितकर्णसीम्नां
कामाक्षि खेलति कटाक्षनिरीक्षणानाम् ॥ ३ ॥
कल्लोलितेन करुणारसवेल्लितेन
कल्माषितेन कमनीयमृदुस्मितेन ।
मामञ्चितेन तव किंचन कुञ्चितेन
कामाक्षि तेन शिशिरीकुरु वीक्षितेन ॥ ४ ॥
साहाय्यकं गतवती मुहुर[2]र्जुनस्य
मन्दस्मितेन परितोषितभीम[3]चेताः ।
कामाक्षि पाण्डवचमूरिव तावकीना
[4]कर्णान्तिकं चलति हन्त कटाक्षलक्ष्मीः ॥ ५ ॥
अस्तं क्षणान्नयतु मे परितापसूर्य-
मानन्दचन्द्रमसमानयतां प्रकाशम् ।
कालान्धकारसुषमां [5]कलयन्दिगन्ते
कामाक्षि कोमलकटाक्षनिशागमस्ते ॥ ६ ॥
ताटङ्कमौक्तिकरुगङ्कुरदन्तकान्तिः
[6]कारुण्यहस्तिपशिखामणिनाधिरूढः ।
उन्मूलयत्वशुभपादपमस्मदीयं
कामाक्षि तावककटाक्षमतङ्गजेन्द्रः ॥ ७ ॥
छायाभरेण जगतां परितापहारी
ताटङ्करत्नमणिपल्लवतल्लजश्रीः ।

---

१. 'परिघूर्णित' इति क-ख-पुस्तकपाठः. २. अर्जुनस्य शौक्लयस्य मध्यमपाण्डवस्य च. ३. भीमः शिवो भीमसेनश्च. ४. कर्णान्तिकं श्रवणसमीपं राधेयाभ्यर्णं च. ५. 'कलयेत्' इति ग-पाठः. ६. कारुण्यमेव हस्तिपकश्रेष्ठस्तेनाधिरूढः.

कारुण्यनाम विकिरन्मकरन्दजालं
कामाक्षि राजति कटाक्षसुरद्रुमस्ते ॥ ८ ॥
सूर्याश्रयप्रणयिनी मणिकुण्डलांशु-
लौहित्यकोकनदकाननमाननीया ।
यान्ती तव स्मरहराननकान्तिसिन्धुं
कामाक्षि राजति कटाक्षकलिन्दकन्या ॥ ९ ॥
प्राप्नोति यं सुकृतिनं तव पक्षपाता-
त्कामाक्षि वीक्षणविलासकलापुरंध्री ।
सद्यस्तमेव किल मुक्तिवधूर्वृणीते
तस्मान्नितान्तमनयोरिदमैकमत्यम् ॥ १० ॥
यान्ती सदैव मरुतामनुकूलभावं
भ्रूवल्लिशक्रधनुरुल्लसिता रसार्द्रा ।
कामाक्षि कौतुकतरङ्गितनीलकण्ठा
कादम्बिनीव तव भाति कटाक्षमाला ॥ ११ ॥
गङ्गाम्भसि स्मितमये तपनात्मजेव
गङ्गाधरोरसि नवोत्पलमालिकेव ।
वक्त्रप्रभासरसि शैवलमण्डलीव
कामाक्षि राजति कटाक्षरुचिच्छटा ते ॥ १२ ॥
संस्कारतः किमपि कन्दलितान्रसज्ञ-
केदारसीम्नि सुधियामुपभोगभाग्यान् ।
कल्याणसूक्तिलहरीकलमाङ्कुरान्नः
कामाक्षि कन्दलयतु त्वदपाङ्गमेघः ॥ १३ ॥
चाञ्चल्यमेव नियतं कलयन्प्रकृत्या
मालिन्यभूः श्रुतिपथाक्रमजागरूकः ।

---

१. सूरि-आश्रय-; सूर्य-आश्रय. २. मरुतां वायूनां देवानां च. ३. नीलकण्ठः शिवो मयूरश्च. ४. 'उपभोगयोग्यान्' इति ग-पाठः.

कैवल्यमेव किमु कल्पयते नतानां
कामाक्षि चित्रमपि[1] ते करुणाकटाक्षः ॥ १४ ॥
संजीवने जननि चूतशिलीमुखस्य
संमोहने शशिकिशोरकशेखरस्य ।
संस्तम्भने च ममताग्रहचेष्टितस्य
कामाक्षि वीक्षणकला परमौषधं ते ॥ १५ ॥
नीलोऽपि रागमधिकं जनयन्पुरारे-
र्लोलोऽपि भक्तिमधिकां द्रढयन्नराणाम् ।
वक्रोऽपि देवि नमतां समतां वितन्व-
न्कामाक्षि नृत्यतु मयि त्वदपाङ्गपातः ॥ १६ ॥
कामद्रुहो हृदययन्त्रणजागरूका
कामाक्षि चञ्चलदृगञ्चलमेखला ते ।
आश्चर्यमम्ब भजतां झटिति स्वकीय-
संपर्क एव विधुनोति समस्तबन्धान् ॥ १७ ॥
कुण्ठीकरोतु विपदं मम कुञ्चितभ्रू-
चापाञ्चितः श्रितविदेह[2]भवानुरागः ।
रक्षोपकार[3]मनिशं जनयञ्जगत्यां
कामाक्षि राम इव ते करुणाकटाक्षः ॥ १८ ॥
श्रीकामकोटि शिवलोचनशोषितस्य
शृङ्गारबीजविभवस्य पुनः प्ररोहे ।
प्रेमाम्भसार्द्रमचिरात्प्रचुरेण शङ्के
केदारमम्ब तव केवलदृष्टिपातम् ॥ १९ ॥
माहात्म्यशेवधिरसौ तव दुर्विलङ्घ्य-
संसारविन्ध्यगिरिकुण्ठनकेलिचुञ्चुः ।

---

१. 'चित्रमयते' इति ग-पाठः. २. विदेहभवा सीता. ३. रक्षारूपमुपकारम्; (पक्षे) रक्षसामपकारम्.

धैर्याम्बुधिं पशुपतेश्चुलकीकरोति
कामाक्षि वीक्षणविजृम्भणकुम्भजन्मा[1] ॥ २० ॥
पीयूषवर्षशिशिरा स्फुरदुल्लसच्छ्री-
मैत्री निसर्गमधुरा कृततारकाधिः ।
कामाक्षि संश्रितवती वपुरष्टमूर्ते[2]-
र्ज्योत्स्नायते भगवति त्वदपाङ्गमाला ॥ २१ ॥
अम्ब स्मरप्रतिभटस्य वपुर्मनोज्ञ-
मम्भोजकाननमिवाञ्चितकण्टकाभम् ।
भृङ्गीव चुम्बति सदैव सपक्षपाता
कामाक्षि कोमलरुचिस्त्वदपाङ्गमाला ॥ २२ ॥
केशप्रभापटलनीलवितानजाले
कामाक्षि कुण्डलमणिच्छविदीपशोभे ।
कम्रे कटाक्षरुचिरङ्गतले कृपाख्या
शैलूषकी[3] नटति शंकरवल्लभे ते ॥ २३ ॥
अत्यन्तशीतलमतन्द्रयतु क्षणार्ध-
मस्तोकविभ्रममनङ्गविलासकन्दम् ।
अल्पस्मितादृतमपारकृपाप्रवाह-
मक्षिप्ररोहमचिरान्मयि कामकोटि ॥ २४ ॥
मन्दाक्षरागतरलीकृति[4]पारतन्त्र्या-
त्कामाक्षि मन्थरतरां त्वदपाङ्गदोलाम् ।
आरुह्य मन्दम्[5]अतिकौतुकशालि चक्षु-
रानन्दमेति मुहुरर्धशशाङ्कमौलेः ॥ २५ ॥
त्रैयम्बकं[6] त्रिपुरसुन्दरि हर्म्यभूमि-
रङ्गं विहारसरसी करुणाप्रवाहः[7] ।

---

१. अगस्त्यः. २. शिवस्य. ३. नटी. ४. 'तरलीकृत' इति ग-पाठः. ५. मन्दमिति क्रियाविशेषणम्. ६. त्रैयम्बकमङ्गं हर्म्यभूमिरित्यन्वयः. ७. 'करुणाकटाक्ष' इति घ-पाठः.

दासाश्च वासवमुखाः परिपालनीयं
कामाक्षि विश्वमपि वीक्षणभूभृतस्ते ॥ २६ ॥
वागीश्वरी सहचरी नियमेन लक्ष्मी-
र्भ्रूवल्लरीवशकरी भुवनानि गेहम् ।
रूपं त्रिलोकनयनामृतमम्ब तेषां
कामाक्षि येषु तव वीक्षणपारतन्त्री ॥ २७ ॥
माहेश्वरं झटिति मानसमीनमम्ब
कामाक्षि धैर्यजलधौ नितरां निमग्नम् ।
जालेन शृङ्खलयति त्वदपाङ्गनाम्ना
विस्तारितेन विषमायुधदाशकोऽसौ ॥ २८ ॥
उन्मथ्य बोधकमलाकरमम्ब जाड्य-
स्तम्बेरमं मम मनोविपिने भ्रमन्तम् ।
कुण्ठीकुरुष्व तरसा कुटिलाग्रसीम्ना
कामाक्षि तावककटाक्षमहाङ्कुशेन ॥ २९ ॥
उद्वेल्लितस्तबकितैर्ललितैर्विलासै-
रुत्थाय देवि तव गाढकटाक्षकुञ्जात् ।
दूरं पलाययतु मोहमृगीकुलं मे
कामाक्षि सत्वरमनुग्रहकेसरीन्द्रः ॥ ३० ॥
स्नेहाद्दतां विदलितोत्पलकान्तिचोरां
जेतारमेव जगदीश्वरि जेतुकामः ।
मानोद्धतो मकरकेतुरसौ धुनीते
कामाक्षि तावककटाक्षकृपाणवल्लीम् ॥ ३१ ॥
श्रौतीं व्रजन्नपि सदा सरणिं मुनीनां
कामाक्षि संततमपि स्मृतिमार्गगामी ।
कौटिल्यमम्ब कथमस्थिरतां च धत्ते
चौर्यं च पङ्कजरुचां त्वदपाङ्गपातः ॥ ३२ ॥

---

१. शिवमेव.

नित्यं श्रुतेः परिचितौ[1] यतमानमेव
नीलोत्पलं निजसमीपनिवासलोलम् ।
प्रीत्यैव पाठयति वीक्षणदेशिकेन्द्रः
कामाक्षि किं नु[2] तव कालिमसंप्रदायम् ॥ ३३ ॥

भ्रान्त्वा मुहुः स्तबकितस्मितफेनराशौ
कामाक्षि वक्त्ररुचिसंचयवारिराशौ ।
आनन्दति त्रिपुरमर्दननेत्रलक्ष्मी-
रालम्ब्य देवि तव मन्दमपाङ्गसेतुम् ॥ ३४ ॥

[3]श्यामा तव त्रिपुरसुन्दरि लोचनश्रीः
कामाक्षि कन्दलितमेदुरतारकान्तिः ।
ज्योत्स्नावती स्मितरुचापि कथं तनोति
स्पर्धामहो कुवलयैश्च तथा चकोरैः ॥ ३५ ॥

कालाञ्जनं च तव देवि निरीक्षणं च
कामाक्षि साम्यसरणिं समुपैति कान्त्या ।
निःशेषनेत्रसुलभं जगतीषु पूर्व-
मन्यत्त्रिनेत्रसुलभं तुहिनाद्रिकन्ये ॥ ३६ ॥

धूमाङ्कुरो मकरकेतनपावकस्य
कामाक्षि नेत्ररुचिनीलिमचातुरी ते ।
अत्यन्तमद्भुतमिदं नयनत्रयस्य
हर्षोदयं जनयते हरिणाङ्कमौलेः ॥ ३७ ॥

आरम्भलेशसमये तव वीक्षणस्य
कामाक्षि मूकमपि वीक्षणमात्रनम्रम् ।
सर्वज्ञता सकललोकसमक्षमेव
कीर्तिः[4]स्वयंवरणमाल्यवती वृणीते ॥ ३८ ॥

---

१. गुरुः. २. 'तु' इति घ-पाठः. ३. श्यामवर्णा, रात्रिश्च. ४. कीर्तिरेव स्वयंवरणमाल्यं तद्वती सर्वज्ञता.

कालाम्बुवाह इव ते परितापहारी
कामाक्षि पुष्करमधः कुरुते कटाक्षः ।
पूर्वः परं क्षणरुचा समुपैति मैत्री-
मन्यस्तु संततरुचिं प्रकटीकरोति ॥ ३९ ॥

सूक्ष्मेऽपि दुर्गमतरेऽपि गुरुप्रसाद-
साहाय्यकेन विचरन्नपवर्गमार्गे ।
संसारपङ्कनिचये न पतत्यमुं ते
कामाक्षि गाढमवलम्ब्य कटाक्षयष्टिम् ॥ ४० ॥

कामाक्षि संततमसौ हरिनीलरत्न-
स्तम्भे कटाक्षरुचिपुञ्जमये भवत्याः ।
बद्धोऽपि भक्तिनिगडैर्मम चित्तहस्ती
स्तम्भं च बन्धमपि मुञ्चति हन्त चित्रम् ॥ ४१ ॥

कामाक्षि कार्ष्ण्यमपि संततमञ्जनं च
बिभ्रन्निसर्गतरलोऽपि भवत्कटाक्षः ।
वैमल्यमन्वहमनञ्जनतां च भूयः
स्थैर्यं च भक्तहृदयाय कथं ददाति ॥ ४२ ॥

मन्दस्मितस्तबकितं मणिकुण्डलांशु-
स्तोमप्रवालरुचिरं शिशिरीकृताशम् ।
कामाक्षि राजति कटाक्षरुचेः कदम्ब-
मुद्यानमम्ब करुणाहरिणेक्षणायाः ॥ ४३ ॥

कामाक्षि तावककटाक्षमहेन्द्रनील-
सिंहासनं श्रितवतो मकरध्वजस्य ।
साम्राज्यमङ्गलविधौ मणिकुण्डलश्री-
र्नीराजनोत्सवतरङ्गितदीपमाला ॥ ४४ ॥

---

१. कमलं तिरस्करोति, मेघश्च पुष्करं जलमधः पातयति. २. विद्युता; (पक्षे) क्षणमात्रस्थायिन्या कान्त्या.

मातः क्षणं स्नपय मां तव वीक्षितेन
मन्दाक्षितेन सुजनैरपरोक्षितेन ।
कामाक्षि कर्मतिमिरोत्करभास्करेण
श्रेयस्करेण मधुपद्युतितस्करेण ॥ ४५ ॥

प्रेमापगापयसि मज्जनमारचय्य
युक्तः स्मितांशुकृतभस्मविलेपनेन ।
कामाक्षि कुण्डलमणिद्युतिभिर्जटालः
श्रीकण्ठमेव भजते तव दृष्टिपातः ॥ ४६ ॥

कैवल्यदाय करुणारसकिंकराय
कामाक्षि कन्दलितविभ्रमशंकराय ।
आलोकनाय तव भक्तशिवंकराय
मातर्नमोऽस्तु परतन्त्रितशंकराय ॥ ४७ ॥

साम्राज्यमङ्गलविधौ मकरध्वजस्य
लोलालकालिकृततोरणमाल्यशोभे ।
कामेश्वरि प्रचलदुत्पलवैजयन्ती-
चातुर्यमेति तव चञ्चलदृष्टिपातः ॥ ४८ ॥

मार्गेण मञ्जुकचकान्तितमोवृतेन
मन्दायमानगमना मदनातुरासौ ।
कामाक्षि दृष्टिरयते तव शंकराय
संकेतभूमिमचिरादभिसारिकेव ॥ ४९ ॥

व्रीडानुवृत्तिरमणीकृतिसाहचर्या
शैवालितां गलरुचा शशिशेखरस्य ।
कामाक्षि कान्तिसरसीं त्वदपाङ्गलक्ष्मी-
र्मन्दं समाश्रयति मज्जनखेलनाय ॥ ५० ॥

---

१. 'मन्देक्षितेन' इति ग-पाठः. २. 'प्रचुरमुत्पल' इति ग-पाठः. ३. 'तमोघतेन' इति पुस्तकेषु पाठः.

काषायमंशुकमिव प्रकटं दधानो
　माणिक्यकुण्डलरुचिं ममताविरोधी ।
श्रुत्यन्तसीमनि रतः सुतरां चकास्ति
　कामाक्षि तावककटाक्षयतीश्वरोऽसौ ॥ ९१ ॥
पाषाण एव हरिनीलमणिर्दिनेषु
　प्रम्लानतां कुवलयं प्रकटीकरोति ।
नैमित्तिको जलदमेचकिमा ततस्ते
　कामाक्षि शून्यमुपमानमपाङ्गलक्ष्म्याः ॥ ९२ ॥
शृङ्गारविभ्रमवती सुतरां सलज्जा
　नासाग्रमौक्तिकरुचा कृतमन्दहासा ।
श्यामा कटाक्षसुषमा तव युक्तमेत-
　त्कामाक्षि चुम्बति दिगम्बरवक्त्रबिम्बम् ॥ ९३ ॥
नीलोत्पलेन मधुपेन च दृष्टिपातः
　कामाक्षि तुल्य इति ते कथमामनन्ति ।
शैत्येन निन्दति यदन्वहमिन्दुपादा-
　न्पाथोरुहेण यदसौ कलहायते च ॥ ९४ ॥
ओष्ठप्रभापटलविद्रुममुद्रिते ते
　भ्रूवल्लिवीचिसुभगे मुखकान्तिसिन्धौ ।
कामाक्षि वारिभरपूरणलम्बमान-
　कालाम्बुवाहसरणिं लभते कटाक्षः ॥ ९५ ॥
मन्दस्मितैर्धवलिता मणिकुण्डलांशु-
　संपर्कलोहितरुचिस्त्वदपाङ्गधारा ।
कामाक्षि मल्लिकुसुमैर्नवपल्लवैश्च
　नीलोत्पलैश्च रचितेव विभाति माला ॥ ९६ ॥
कामाक्षि शीतलकृपारसनिर्झराम्भः-
　संपर्कपक्ष्मलरुचिस्त्वदपाङ्गमाला ।

गोभि[1]: सदा पुररिपोरभिलष्यमाणा[2]
दूर्वाकदम्बकविडम्बनमातनोति ॥ ५७ ॥
हृत्पङ्कजं मम विकासयतु प्रमुष्ण-
न्नुल्लासमुत्पलरुचेस्तमसां निरोद्धा ।
दोषानुषङ्गजडतां जगतां धुनानः
कामाक्षि वीक्षणविलासदिनोदयस्ते ॥ ५८ ॥
चक्षुर्विमोहयति चन्द्रविभूषणस्य
कामाक्षि तावककटाक्षतमःप्ररोहः ।
प्रत्यङ्मुखं तु नयनं स्तिमितं मुनीनां
प्राकाश्यमेव नयतीति परं विचित्रम् ॥ ५९ ॥
कामाक्षि वीक्षणरुचा युधि निर्जितं ते
नीलोत्पलं निरवशेषगताभिमानम् ।
आगत्य तत्परिसरं श्रवणावतंस-
व्याजेन नूनमभयार्थनमातनोति[3] ॥ ६० ॥
आश्चर्यमम्ब वदनाभ्युदयावलम्बी
कामाक्षि चञ्चलनिरीक्षणविभ्रमस्ते ।
धैर्यं विधूय तनुते हृदि रागबन्धं
शंभोस्तदेव विपरीततया मुनीनाम् ॥ ६१ ॥
जन्तोः सकृत्प्रणमतो जगदीड्यतां[4] च
तेजस्वितां च निशितां च मतिं सभायाम् ।
कामाक्षि माक्षिकझरीमिव वैखरीं[5] च
लक्ष्मीं च पक्ष्मलयति क्षणवीक्षणं ते ॥ ६२ ॥
कादम्बिनी किमयते न जलानुषङ्गं
भृङ्गावली किमुररीकुरुते न पद्मम् ।

---

१. 'दृष्टिभिः; (पक्षे) धेनुभिः. २. 'अभिलक्ष्यमाणा' इति क-ख-ग-पाठः. ३. 'अभयार्थित' इति घ-पाठः. ४. जगत्पूज्यताम्. ५. मधुधारामिव वाणीम्.

किं वा कलिन्दतनया सहते न गङ्गां
कामाक्षि निश्चयपदं न तवाक्षिलक्ष्मीः ॥ ६३ ॥
काकोलपावकतृणीकरणेऽपि दक्षः
कामाक्षि बालकसुधाकरशेखरस्य ।
अत्यन्तशीतलतमोऽप्यनुपारतं ते
चित्तं विमोहयति चित्रमयं कटाक्षः ॥ ६४ ॥
कार्पण्यपूररसवर्धितमम्ब मोह-
कन्दोद्गतं भवमयं विषपादपं मे ।
तुङ्गं छिनत्तु तुहिनाद्रिसुते भवत्याः
काञ्चीपुरेश्वरि कटाक्षकुठारधारा ॥ ६५ ॥
कामाक्षि घोरभवरोगचिकित्सनार्थ-
मभ्यर्थ्य देशिककटाक्षभिषक्प्रसादात् ।
तत्रापि देवि लभते सुकृती कदाचि-
दत्यन्तदुर्लभमपाङ्गमहौषधं ते ॥ ६६ ॥
कामाक्षि देशिककृपाङ्कुरमाश्रयन्तो
नानातपोनियमनाशितपाशबन्धाः ।
वासालयं तव कटाक्षममुं महान्तो
लब्ध्वा सुखं समधियो विचरन्ति लोके ॥ ६७ ॥
साकूतसंल्लपितगर्भितमुग्धहासं
व्रीडानुरागसहचारिविलोकनं ते ।
कामाक्षि कामपरिपन्थिनि मारवीर-
साम्राज्यविभ्रमदशां सफलीकरोति ॥ ६८ ॥
कामाक्षि विभ्रमबलैकनिधिर्विधाय
भ्रूवल्लिचापकुटिलीकृतिमेव चित्रम् ।
स्वाधीनतां तव निनाय शशाङ्कमौले-
रङ्गार्धराज्यसुखलाभमपाङ्गवीरः ॥ ६९ ॥

१. विषाग्निनिवारणे. २. 'दक्षं' इति पुस्तकेषु पाठः. ३. शिवस्य.

कामाङ्कुरैकनिलयस्तव दृष्टिपातः
कामाक्षि भक्तमनसां [1]प्रददाति कामान् ।
[2]रागान्वितः स्वयमपि प्रकटीकरोति
वैराग्यमेव कथमेष महामुनीनाम् ॥ ७० ॥

कालाम्बुवाहनिवहैः कलहायते ते
कामाक्षि कालिममदेन सदा कटाक्षः ।
चित्रं तथापि नितराममुमेव दृष्ट्वा
सोत्कण्ठ एव रमते किल नीलकण्ठः ॥ ७१ ॥

कामाक्षि मन्मथरिपुं प्रति मारताप-
मोहान्धकारजलदागमनेन नृत्यन् ।
दुष्कर्मकञ्चुकिकुलं कवलीकरोतु
व्यामिश्रमेचकरुचिस्त्वदपाङ्गकेकी ॥ ७२ ॥

कामाक्षि मन्मथरिपोरवलोकनेषु
कान्तं पयोजमिव तावकमक्षिपातम् ।
प्रेमागमो दिवसवद्विकचीकरोति
लज्जाभरो रजनिवन्मुकुलीकरोति ॥ ७३ ॥

मूको विरिञ्चति परं पुरुषः कुरूपः
कंदर्पति त्रिदशराजति किंपचानः ।
कामाक्षि केवलमुपक्रमकाल एव
लीलातरङ्गितकटाक्षरुचः क्षणं ते ॥ ७४ ॥

नीलालका मधुकरन्ति मनोज्ञनासा-
मुक्तारुचः प्रकटकन्दबिसाङ्कुरन्ति ।
कारुण्यमम्ब मकरन्दति कामकोटि
मन्ये ततः कमलमेव [3]विलोकनं ते ॥ ७५ ॥

---

१. 'प्रददातु' इति ग-पाठः. २. 'मार्गान्वितः' इति घ-पाठः. ३. 'विलोचनं' इति क-ग-घ-पाठः.

वत्यादीनामुत्कर्षो देहे[1] गुणालंकारजीवितपरिकरेभ्यः ॥ तत्र शोभाविधायिनो धर्मा गुणाः ॥

**रूपं वर्णः प्रभा राग आभिजात्यं विलासिता ।**
**लावण्यं लक्षणं छाया सौभाग्यं चेत्यमी गुणाः ॥**

अवयवानां रेखास्पाष्ट्यं रूपम् ॥ गौरतादिधर्मविशेषो वर्णः ॥ काचकाच्यरूपा[2] रविवत्कान्तिः प्रभा ॥ नैसर्गिकस्मेरत्वमुखप्रसादादिः[3] सर्वेषामेव चक्षुर्बन्धको धर्मो रागः ॥ कुसुमधर्मा मार्दवादिर्ललनादिरूपः स्पर्शविशेषः पेशलताख्य आभिजात्यम् ॥ अङ्गोपाङ्गानां यौवनोद्भेदी मन्मथवासनाप्रयुक्तः कटाक्षादिवद्विभ्रमाख्यश्चेष्टाविशेषो विलासिता ॥ तरङ्गिद्रवस्वभावाप्यायिनेत्रपेयव्यापिस्निग्धमधुर इव पीतिमोत्कर्षैकसार इव पूर्णेन्दुवदाह्लादको धर्मः संस्थानमुग्धिमव्यङ्ग्यो लावण्यम् ॥ अङ्गोपाङ्गानामसाधारणशोभाप्राशस्त्यहेतुरौचित्यात्मा स्थायी धर्मो लक्षणम् ॥ तस्य युक्तप्रमाणतादोषस्पर्शस्निग्धवक्रानियतलोमाङ्गसुश्लिष्टसंधानतानाहपरिणाहौचित्यचक्रपद्मादिलेखाङ्कनायोगेभ्यः प्रसिद्धाङ्गपूर्णतादोषवैकल्यधर्मसौन्दर्यप्रमाणौचित्यलोकाप्रसिद्धविशिष्टाङ्गयोगाख्याः[4] क्रमेण षड्भेदाः ॥ अग्राम्यतया वक्रिमत्वख्यापिनी ताम्बूलपरिधाननृत्तभणितिगमनादिस्थानकेषु सूक्ष्मा भङ्गिश्छाया[5] ॥ स्फुरल्लक्ष्म्युपभोगपरिमलादिगम्योऽन्तःसारो[6] रञ्जकतया वशीकर्ता सहृदयसंवेद्यधर्मभेदश्च सौभाग्यम् ॥ तत्राद्ये स्मरमदपुलकादयो भेदाः । अन्त्ये तु मणितरूपपरिभोगाधरास्वादसौरभादिभिर्[7]युगपद्रसवत्त्वात्पञ्चेन्द्रियसुखलाभः[8] ॥

इति श्रीराजानकरुय्यकविरचितायां सहृदयलीलायां गुणोल्लेखः प्रथमः ।

---

**रत्नं हेमांशुके माल्यं मण्डनद्रव्ययोजने ।**
**प्रकीर्णं चेत्यलंकाराः सप्तैवेते मया मताः ॥**

---

१. 'देहगुणा–' इति क-पाठः. २. 'काचकच्य' इति ख-पाठः. ३. 'नैसर्गिकः' इति ख-पाठः. ४. 'प्रमाणोचित्याख्या लोकाप्रसिद्धा विशिष्टा–' इति क-पाठः. ५. 'छायास्मरलक्ष्मीः' इति क-पाठः. ६. 'उपभोगपरिगम्योन्तस्मारो रञ्जक–' इति क-पाठः. ७. 'परिभोगधाराकुसुमसौरभादिभि–' इति क-पाठः. ८. 'पञ्चेन्द्रियी' इति ख-पाठः.

तत्र वज्रमुक्तापद्मरागमरकतेन्द्रनीलवैदूर्यपुष्परागकर्केतनपुलकरुधिराक्षभीष्मस्फटिकप्रवालरूपाणि त्रयोदश रत्नानि ॥ हेम नवधा । जाम्बूनदशातकौम्भहाटकवैणवशृङ्गीशुक्तिजजातरूपरसविद्धाकरोद्गतभेदात् ॥ चतुर्धा रत्नहेममयः । आवेध्यनिबन्धनीयप्रक्षेप्यारोप्यभेदात् ॥ तत्र ताडीकुण्डलश्रवणवालिकादिरावेध्यः । अङ्गदश्रोणीसूत्रमूर्धमणिशिखावृढिकादिर्निबन्धनीयः । ऊर्मिकाकटकमञ्जीरसदृशः प्रक्षेप्यः । प्रालम्बमालिकाहारनक्षत्रमालाप्रभृतिरारोप्यः ॥ चतुर्धांशुकमयः । त्वक्फलक्रिमिरोमजत्वात्क्रमेण क्षौमकार्पासकौशेयराङ्कवादिभेदात् ॥ पुनस्त्रिधा । निबन्धनीयप्रक्षेप्यारोप्यवैचित्र्यात् ॥ तत्र निबन्धनीयः शिरःशाटकजघनवसनादिः । प्रक्षेप्यः कञ्चुलिकादिः । आरोप्य उत्तरीयपटादिः ॥ सर्वस्यास्यानेकविधत्वं वर्णविच्छित्तिनानात्वात् ॥ ग्रथिताग्रथितवशाद्द्विविधः सन्नष्टधा माल्यमयः ॥ वेष्टितविततसंघात्यग्रन्थिमदवलम्बमुक्तकमञ्जरीस्तबकलक्षणमाल्यभेदेन ॥ तत्रोद्वर्तितं वेष्टितम् । पार्श्वतो विस्तारितं विततम् । बहुभिः पुष्पैः समूहेन रचितं संघात्यम् । अन्तरान्तरा विषमं ग्रन्थिमत् । स्पष्टोम्भितमवलम्बम् । केवलं मुक्तकः । अनेकपुष्पमयी लता मञ्जरी । कुसुमगुलुच्छं स्तबकः ॥ तस्यावेध्यादयोऽपि चत्वारो भेदाः ॥ कस्तूरीकुङ्कुमचन्दनकर्पूरागुरुकुलकदन्तसमपटवाससहकारतैलताम्बूलालक्तकाञ्जनगोरोचनादिनिर्वृत्तो मण्डनद्रव्यमयः ॥ भ्रूघटनालकरचनाधम्मिल्लबन्धादि-

१. 'कर्केतक' इति ख-पुस्तके, 'कल्केतन' इति च क-पुस्तके पाठः. २. 'पुलकः प्रस्तरभेदे' इति मेदिनी. रुधिराख्यो मणिभेदः. तल्लक्षणं गरुडपुराणेऽष्टसप्ततिमितेऽध्याये द्रष्टव्यम्. भीष्ममपि रत्नभेदः. 'भीष्मरत्नम्, हिमालयोत्तरदेशजातशुक्लवर्णप्रस्तरविशेषे' इति शब्दार्थचिन्तामणिः. 'वज्रेन्द्रनीलमरकतकर्केतनपद्मरागरुधिराख्याः । वैदूर्यपुलकविषमकराजमणिस्फटिकशशिकान्ताः ॥' इति रत्नगणनायां वराहमिहिरः (बृहत्संहिता ८०।४). 'विषमक' इत्यस्य स्थाने 'विमलक' इति पाठः क्वचिद्दृश्यते. 'भीष्मक' इति पाठोऽपि संभाव्यते. ३. 'विद्रुमरूपाणि' इति क-पाठः. ४. 'शुक्तिजातरूप्य' इति क-पाठः. ५. 'भेदेन' इति ख-पाठः. ६. 'ताडी' इति क-पुस्तके नास्ति. ७.'प्रलम्ब' इति ख-पाठः. ८. 'भेदः' इति क-पाठः. ९. 'रोप्यभेदात्' इति क-पाठः. १०. 'तत्र' इति ख-पुस्तके नास्ति. ११. 'वशात्पुनर्द्विविधः' इति क-पाठः. १२. 'संघात्य' इति ख-पाठः. १३. 'तत्र' इति ख-पुस्तके नास्ति. १४. 'संघात्यम्' इति ख-पाठः. १५. 'ग्रन्थिमद्विषमम्' इति क-पाठः. १६. 'कर्पूरागुरुपटवास' इति क-पाठः.

योजनामयः ॥ द्विधा प्रकीर्णमयः ॥ जन्यनिवेश्यभेदेन ॥ श्रमजलमधुमदादिर्जन्यः । दूर्वाशोकपल्लवयवाङ्कुररजतत्रपुशङ्खतालदलदन्तपत्रिकामृणालवलयकरक्रीडनकादिर्निवेश्यः ॥ एतत्समवायो वेषः ॥ स च देशकालप्रकृत्यवस्थासात्म्येन । एतेषां विच्छित्त्या यथास्थाननिवेशनपरभागलाभाद्रामणीयकवृद्धिः ॥

इति श्रीराजानकरुय्यकविरचितायां सहृदयलीलायामलंकारोल्लेखो द्वितीयः ।

---

शोभाया अनुप्राणकं यौवनाख्यं जीवितम् ॥ बाल्यानन्तरं गात्राणां वैपुल्यसौष्ठवविभक्ततावि‍धायी स्फुटितदाडिमोपमः स्मरवसतिरवस्थाभेदो यौवनम् ॥ तस्य वयःसंधिरारम्भः ॥ मध्यं तु प्रौढिकालः ॥ प्रथमे धम्मिल्लरचनालकभङ्गनीविनहनदन्तपरिकर्मपरिष्करणदर्पणेक्षणपुष्पोच्चयमाल्योम्भनजलक्रीडाद्यूताश्लीलच्छेकभणित्यनिमित्तलज्जानुभावशृङ्गारशिक्षादय आवर्तमानाश्चेष्टाः ॥ अन्त्ये तु शृङ्गारानुभावतारतम्यं श्रेयः ॥

इति श्रीराजानकरुय्यकविरचितायां सहृदयलीलायां जीवितोल्लेखस्तृतीयः ।

---

शोभाया आराढुपकारकत्वाद्व्यञ्जकः परिकरः ॥ तस्य चेतनाचेतनयोः स्थाणुचलयोः प्रत्येकं श्लिष्टसंनिहितमात्ररूपत्वेनाष्टविधत्वम् ॥ उत्सङ्गोपासीनकान्तहयपरिवारवातायनवितानतनौच्छत्रादीनि दर्शनानि ॥ तानि द्विधा । व्यस्तसमस्तभेदात् । एवं शोभासमुत्पादकसमुद्दीपकानुप्राणकव्यञ्जकाः क्रमाद्गुणालंकारजीवितपरिकराः ॥ एवं परस्परोपकरकत्वादितरेतरानुग्राहकत्वं सिद्धम् ॥

इति श्रीराजानकरुय्यकविरचितायां सहृदयलीलायां परिकरोल्लेखश्चतुर्थः ।

## समाप्तेयं सहृदयलीला ।

---

१. 'वेशः' इति पुस्तकद्वयेऽपि. २. 'इति सहृदय—' इति क-पाठः; 'सहृदय—' इति ख-पाठः. 'श्रीराजानक—' इत्यादि पुस्तकद्वयेऽपि नास्ति. ३. 'बाल्यान्तरं' इति ख-पाठः. ४. 'विधायी सदस्फुटो दाडिमोपमः' इति क-पाठः. ५. 'अत्रापि पूर्वोल्लेखसमाप्तिवदव पुस्तकद्वये वर्तते. ६. 'मात्रत्वेन' इति क-पाठः. ७. 'सहृदयलीलायां' इत्येव ख-पाठः. ८. 'समाप्तेयं सहृदयचमत्कारिणी सहृदयलीला । कृतिः श्रीमद्विपश्चिद्वरराजानकतिलकात्मजश्रीमदालंकारिकसमाजाग्रगण्यश्रीराजानकरुय्यकस्य राजानकरुचकापरनाम्नोऽलंकारसर्वस्वकृतः' इति ख-पुस्तकेऽस्ति. क-पुस्तके तु 'सहृदयचमत्कारिणी' इति विशेषणं नास्ति.

